# A BRIGHT NEW TRADITION IS BUILT by THE READERS OF

# THE HERITAGE



The span of one and half years is not a long time, yet given will and goodwill, enough of a time to build a healthy, meaningful and intelligent reading tradition.

SLOWLY BUT STEADILY THE ELITE OF INDIA AND MANY LOVERS OF INDIAN CULTURE ABROAD ARE UNITING IN THE HERITAGE





* THE HERITAGE reveals the fourth dimension of life to you—through series like *"The Other Experience"* and "Fables and Fantasies for Adults".
* THE HERITAGE brings to you the best of creative literature of Contemporary India—stories, *novels* and poems.
* THE HERITAGE features pictorial articles on places and monuments delving into their *roots*.
* THE HERITAGE takes you to a tour of the *Little-Known India.*




FEATURES AND FICTION FOR TODAY AND TOMORROW

# धर्माविरुद्धः अर्थः कामः च

ऊर्ध्वबाहुर्विरौम्येषः
न च कश्चित् शृणोति मे।
धर्मादर्थश्च कामश्च
स किमर्थं न सेव्यते?

**व्या**समहर्षिः वदति– "यदि विना लोपं धर्माचरणं क्रियते तर्हि अर्थः सिध्यति, कामः अपि सिध्यति। एतां वस्तुस्थितिम् अहं जानन् बाहुद्वयम् उन्नीय उच्चैः घोषणं कुर्वन् अस्मि। तथापि कोऽपि मम वचनानां श्रवणे न आसक्तः। न कोऽपि धर्मं सेवते" इति।

सामान्यानां सर्वेषां जीवनलक्ष्यं – सुखप्राप्तिः। एतदर्थं तु बहूनि साधनानि अपेक्षितानि। तानि च धनं विना न प्राप्यन्ते। अतः सर्वोऽपि मानवः सुखप्राप्तेः इच्छया धनसम्पादने निरतः भवति। केषाञ्चित् तु धनम् एव दैवम्!

लोके जनानां विचित्रा प्रवृत्तिः –

"पुण्यस्य फलम् इच्छन्ति पापं कुर्वन्ति यत्नतः।"

सर्वे पुण्यस्य फलं सर्वम् अपि इच्छन्ति। किन्तु तदनुगुणं सत्कार्याणि कर्तुं न इच्छन्ति। धनादिसम्पादनेच्छया पापकार्याणि एव आचरन्ति। 'निम्बवृक्षस्य आरोपणेन आम्रफलानि प्राप्तुं न शक्यते' इति जानन्तः अपि ते तद्विरुद्धम् एव आचरन्ति।

धर्मविरुद्धस्य मार्गस्य आश्रयणेन धनं सुखं च लभ्यते इति जनाः भ्रान्ताः। तात्कालिकं फलं तु तैः प्राप्येत। किन्तु तस्य परिणामः अन्यथा भवति एव। यथा आचरणं तथा फलं प्राप्यते।

धर्ममार्गेण विलम्बेन अपि धनप्राप्तिः सुखलाभः च निश्चितः। दुष्परिणामः तु नास्ति एव। अतः भारतीयं जीवनसूत्रं– "जीवने अर्थः कामः च यथेष्टं सम्पादयितुं शक्यते। किन्तु तत् द्वयम् अपि धर्माविरुद्धं भवेत्" इति।



# अभ्यासाः (Drills)

शिष्यः -श्रीमन्! विद्यालयेषु पञ्चषाणां वर्षाणाम् अध्ययनानन्तरम् अपि यत् न सिध्यति तादृशं कथं वा भवन्तः अल्पे काले साधयन्ति? कथं वा भवतां पाठनेन छात्राः अल्पे काले सम्भाषणसमर्थाः भवन्ति?

आचार्यः - वयं तु यत् पाठयामः तद्विषये अभ्यासं कारयामः। पर्याप्तमात्रेण अभ्यासः कारितः चेत् प्रयोगसामर्थ्यं स्वयं सिध्यति।

शि - शब्दस्य अर्थः अवगतः चेत् प्रयोक्तुं शक्नोति किल कोऽपि?

आ - तन्नाम मातृभाषया शब्दस्य अर्थः बोधितः चेत् पर्याप्तम् इति भवतः अभिप्रायः। किन्तु वस्तुस्थितिः इतोऽपि भिन्ना एव भवति। अध्ययनसमये सर्वे शब्दार्थं जानन्ति एव। तथापि ते प्रयोगे कष्टम् अनुभवन्ति किल?

शि - एवं किमर्थं भवति? यस्य ज्ञानं तस्य प्रयोगः किमर्थं वा न शक्यते?

आ - तत् ज्ञानं दृढं न भवति। एकक्षणे ज्ञातम् अपि अनन्तरक्षणे विस्मृतं भवति। अतः एव वयं वदामः- यत् पाठयति तस्य विषये अभ्यासं कारयतु इति।

शि - एवं तर्हि महान् प्रयासः करणीयः भवति। यदि विंशतिः शब्दाः पाठनीयाः चेत् तावद्वारम् अभ्यासः कारणीयः। एकैकस्मिन् अभ्यासे दश वाक्यानि वाचनीयानि भवन्ति। ...

आ - एवं करणम् अनिवार्यम्। एतदर्थं महान् समयः व्ययीकरणीयः भवति अपि। अतः एव वयं वदामः यत् 'अल्पं पाठ्यभागं स्वीकरोतु, अधिकम् अभ्यासं कारयतु' इति। तदानीं च परिमितीकरणम् अङ्गीकरणीयं भवति। एतस्य

तत्त्वस्य आधारेण एव शब्देषु अकारान्तस्य प्रयोगसुलभस्य स्वीकारः, पर्यायपदेषु एकस्य अङ्गीकारः, भवच्छब्दप्रयोगस्य आदरः इत्यादयः अस्माभिः अङ्गीकृताः। सुदूरं प्रवासार्थं गन्तुम् उद्युक्तः कश्चित् यथा न्यूनतमं भारं केवलं नेतुं प्रयतते, भाराधिक्यं यावच्छक्यं परिहरति च तद्वत् एव पाठने अपि।

शि - अधिकं पाठयामः चेत् छात्रस्य अधिकः लाभः भवति किल? यतः अधिकस्य अधिकं फलम्।

आ - अधिकस्य फलस्य आशया वयम् अभ्यासस्य, तद्द्वारा दृढीकरणस्य च उपेक्षां कुर्मः चेत् अपेक्षितः परिणामः कथं लभ्येत? इदानीन्तनपरिस्थितेः एतदेव कारणम्। संस्कृतज्ञाः बहवः पर्याप्तमात्रेण ज्ञानं प्राप्तवन्तः अपि अभ्यासाभावकारणतः सम्भाषणे क्लेशम् अनुभवन्ति।

शि - अन्यच्च मया लक्षितं यत् सम्भाषणसमर्थाः अपि बहवः सामान्यान् दोषान् कुर्वन्ति। (यथा – विशेषणविशेष्यविषये, लिङ्गविषये इ)

आ - अत्रापि कारणम् अभ्यासाभावः एव। अतः एव शिक्षणविदः वदन्ति यत् शिक्षणे अभ्यासः अनिवार्यः भवेत् इति। सुलभतया शिक्षणार्थं, पाठितस्य दृढीकरणार्थं, भ्रमनिवारणार्थं, प्रयोगपाठनार्थं च अभ्यासः बहुधा उपकरोति।

शि - आचार्य! अभ्यासदृष्ट्या वयं परिमितीकरणम् अङ्गीकुर्मः। तेन ज्ञानम् अपि न्यूनं भवति। तथा च विषयग्रहणसामर्थ्यं सीमितं भवति किल?

आ - सहजम् एतत्। आधारभूमिः यावत् दृढा न भवति तावत् भवननिर्माणं न भवति किल? अतः प्रारम्भे स्तरे प्रयोगस्य (निरर्गलतायाः) प्राधान्यं, यस्य च अभ्यासः मूलम्। अनन्तरे स्तरे ज्ञानविस्तारः कारयितुं शक्यः। सर्वस्य अपि कश्चन सोपानक्रमः भवति एव किल?

शि - आम्। भवदुक्तं सत्यम् एव।





# चन्दमामा

डिसेम्बर - १९८६

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २.५०
वार्षिकं ग्राहकशुल्कं रू. ३०.००

# चन्दमामा

संस्थापकः– "चक्रपाणिः" सञ्चालकः– 'नागिरेड्डी'

संस्कृतं नाम पूजा इति सामान्याना जनानाम् अभिप्रायः। किन्तु संस्कृते अपि विज्ञानं यथेष्टम् अस्ति। संस्कृतम् अपि इतरभाषाः इव व्यावहारिकं, संस्कृते अपूर्वं तत्त्वज्ञानम् अस्ति, इत्यादिकं विषयं प्रायः अङ्गुलिगणनीयाः केवलं जानन्ति।

विज्ञानादिविषयाः संस्कृते शास्त्रनाम्ना व्यवह्रियन्ते। दौर्भाग्यस्य विषयः यत् एतेषाम् अध्ययने इदानीन्तनशिक्षणनीतौ अवकाशः विशेषतः नास्ति। महाविद्यालयेषु तु दर्शन-साहित्यादिषु द्वित्रेषु विषयेषु स्नातकोत्तरपदव्यः भवन्ति। साम्प्रदायिक-महाविद्यालयेषु बहुषु विषयेषु स्नातकोत्तरपदवी अस्ति इति तु सत्यम् एव, तथापि केचन विषयाः तत्रापि अस्पृष्टाः भवन्ति। शिल्पशास्त्रम्, अश्वगजायुर्वेदम् इत्यादीनां बहूनां शास्त्राणाम् अध्ययनार्थम् अवकाशः एव न भवति।

किं बहुना, दर्शनेषु अन्यतमं चार्वाकदर्शनम्। सर्वेषु दर्शनेषु प्रायः एतस्य खण्डनम् उल्लेख वा भवति एव। किन्तु एतस्य स्वतन्त्रतया अध्ययनं किं, पूर्णतया उपलब्धिः अपि नास्ति! पूर्णतः उपलब्धिः अशक्या इति तु न। कुत्रापि ताडग्रन्थेषु निलीनं स्यात् तत्।

व्यावहारिकलाभः एव इदानीन्तनजीवनस्य परमं लक्ष्यम्। अतः शास्त्राणाम् अध्येतारः एव विरलाः। तथापि एकः वा यदि अध्येतुम् इच्छति तर्हि कुत्रापि तदर्थम् अवकाशः भवेत्। अन्यथा ते विषयाः सर्वथा लुप्ताः भवन्ति।

सम्पुटः - ३ डिसेम्बर्-८६ सञ्चिका - ९

प्रतिकृतिमूल्यं रू. २.५० * वार्षिकं ग्राहकशुल्कं रू. ३०.००






**रसप्रश्नाः**

# युक्तम् उत्तरं किम्?

(अधः केचन प्रश्नाः दत्ताः सन्ति। तेषाम् उत्तररूपेण विकल्पत्रयं सूचितम् अस्ति। युक्तस्य उत्तरस्य अन्वेषणं कुर्वन्तु)

१) पञ्चमहाकाव्येषु कालिदासस्य महाकाव्यद्वयं प्रविष्टम्। तयोः नाम किम्?

(१. रघुवंशः कुमारसम्भवः च। २. रघुवंशः शाकुन्तलं च। ३. शाकुन्तलं कुमारसम्भवः च।)

२) भगवद्गीता महाभारतस्य कस्मिन् पर्वणि प्रविशति?

(१. विराटपर्वणि। २. भीष्मपर्वणि। ३. शान्तिपर्वणि।)

३) कालिदासः कया बिरुदा प्रसिद्धः अस्ति?

(१. 'उपमा'कालिदासः। २. 'दीपशिखा'कालिदासः। ३. 'भोज'कालिदासः।)

४) महाभारतस्य मूलस्वरूपस्य किं नाम?

(१. महाभारतम् इत्येव। २. भारतम् इति। ३. जयः इति।)

५) आदिकाव्यम् इति कस्य काव्यस्य नाम?

(१. रघुवंशस्य। २. रामायणस्य। ३. महाभारतस्य।)

६) भारविकाव्यस्य वैशिष्ट्यं किम्?

(१. उपमालङ्कारः। २. पदलालित्यम्। ३. अर्थगौरवम्।)

७) भासस्य 'पञ्चरात्रम्' कीदृशं रूपकम्?

(१. व्यायोगः। २. समवकारः। ३. नाटकम्।)

८) 'ऋतुसंहारः' एतत् कीदृशं काव्यम्?

(१. महाकाव्यम्। २. खण्डकाव्यम्। ३. चम्पूकाव्यम्।)

९) 'भट्टिकाव्यम्' इति कस्य ग्रन्थस्य नाम?

(१. रावणवधस्य। २. शिशुपालवधस्य। ३. किरातार्जुनीयस्य।)

उत्तराणि –

(१) १. (२) २. (३) २. (४) ३. (५) २. (६) ३. (७) २. (८) २. (९) १.



# रसवार्ता:



## जटिला जनसङ्ख्यासमस्या

अस्य शतकस्य समाप्तितः पूर्वम् एव मुम्बई, कलकत्ता देहली नगराणि अधिकसङ्ख्याकत्वेन प्रसिद्धेषु दशसु नगरेषु अन्यतमानि भविष्यन्ति। इदानीं मेक्सिको नगरे अत्यधिका जनसङ्ख्या अस्ति, यस्मिन् च १७ मिलिय-जनाः निवसन्ति। २००० तमे वत्सरे एतस्य देशस्य जनसङ्ख्या २६.३ मिलिय भवेत्। २४ मिलियात्मिकां जनसङ्ख्यां प्राप्य सावोपोलो द्वितीयं स्थानं, १७.१ मिलिय जनसङ्ख्यायुतं जपानदेशस्य टोकियो योकोहोमा तृतीयं स्थानं च प्राप्नुयात् इति ऐक्यराज्यसमित्या प्रकाशिता काचित् निवेदिका सूचयति।

## विकलाङ्गेन कृतं पर्वतारोहणम्



योषियोफुरूची नामकः ४२ वर्षीयः कश्चन अपघाते पादविहीनः जातः। तस्य तु पर्वतारोहणे विशेषोत्साहः। केषाञ्चित् मित्राणां साहाय्येन हस्तयोः हिमकवचं धृत्वा सः हिमालयम् आरूढवान्। विकलाङ्गः अपि सः इतः पूर्वम् एव जपानदेशस्य फुजीशिखरं चापि आरूढवान् आसीत् इति श्रूयते।



## महाश्मश्रु

क्यालिफोर्निया देशस्य न्यूहालुप्रदेशीयः जिम् मिचेल् नामकः कश्चन प्रपञ्चे एव अतिमहत् श्मश्रु धृतवान् अस्ति। एतस्य श्मश्रुणः दैर्घ्यं १७ सें मी.। एतस्य वर्धनार्थं सः पञ्चवर्षपर्यन्तं श्रद्धया आसक्त्या च परिश्रमं कृतवान् आसीत्।

# ऊर्वशी

पूर्वं कदाचित् नरनारायणौ तपसि मनौ आस्ताम्। तयोः तपसः भङ्गार्थं देवेन्द्रः अप्सरसः प्रेषितवान्। नारायणः एतत् ज्ञात्वा नखैः ऊरुं विच्छिद्य अतिसुन्दरीं काञ्चित् स्त्रियं सृष्टवान्। तस्याः अपूर्वं सौन्दर्यं दृष्ट्वा लज्जिताः अप्सरस्स्त्रियः मौनं प्रतिगतवत्यः। ऊरुतः उत्पन्ना इत्यतः तस्याः नाम ऊर्वशी इति जातम्। अनन्तरं सा देवेन्द्रस्य आस्थाने नर्तकीषु अन्यतमा अभवत्।

एकदा भूलोकतः आगतः चक्रवर्ती पुरूरवाः ऊर्वश्याः नाट्यं दृष्ट्वा आकृष्टः। तां परिणेतुम् इष्टवान् च। ऊर्वशी तं परिणीतवती। देवेन्द्रः अपि अत्र अनुमतिं दत्तवान्। विवाहानन्तरं तौ भूलोके सुखेन दिनानि यापितवन्तौ।

चत्वारि वर्षाणि अतीतानि। ऊर्वश्याः अनुपस्थित्या देवाः खिन्नाः। 'कथञ्चित् ऊर्वशी देवलोकम् आनेतव्या' इति ते चिन्तितवन्तः। केचन गन्धर्वाः भूलोकम् आगत्य झञ्झावातमय्यां रात्रौ ऊर्वश्याः शयनगृहे स्थितान् हरिणशिशून् अपहृतवन्तः। एतान् हरिणशिशून् अन्विश्यन्ती ऊर्वशी आकाशमार्गेण गन्धर्वान् अनुसृत्य गतवती। एवंक्रमेण गन्धर्वाः तां देवलोकं नीतवन्तः।

ऊर्वश्याः अदर्शनेन पुरूरवसः मतिभ्रंशः जातः इव। सः तां सर्वत्र अन्विश्य अपि निराशः। अन्ते देवानाम् अनुग्रहेण ऊर्वशीं पुनः प्राप्य सुखेन जीवितवान्।





# कृपण: गोपीनाथ:

नागवनग्रामीणस्य गोपीनाथस्य धनविषये व्यामोह: अधिक:। एतावत्पर्यन्तं पीनसादिसामान्यरोगात् इतरे रोगा: तं न पीडितवन्त: आसन्। किन्तु एतत्सन्दर्भे स: विचित्रया उदरवेदनया पीडित: अभवत्। केनापि औषधेन रोग: न शान्त:। एतेन गोपीनाथ: चिन्ताक्रान्त: जात:।

तदा गोपीनाथस्य माता कावेरी उक्तवती- " इदानीं स्वर्गस्थ: भवत: पिता अपि पूर्वं कदाचित् एतादृश्या एव उदरवेदनया पीडित: आसीत्। तदानीम् अपि औषधं निष्प्रयोजकम् आसीत्। अन्ते स: सद्ब्राह्मणाय गोदानं कृतवान्। तदा तु रोग: इन्द्रजालेन इव अकस्मात् शान्त:" इति।

"मम रोगस्य गोदानस्य च क: सम्बन्ध:? गोदानं किम् औषधत्वेन परिणमति वा?" इति पृष्टवान् गोपीनाथ:।

वस्तुत: गोपीनाथ: अस्यां तीव्र रोगपरिस्थितौ अपि धनव्ययं कर्तुं न इच्छति। मातु: वचनेन स: दिग्भ्रान्त: इव आसीत्।

तदा माता कावेरी पुन: उक्तवती- "वत्स! अस्माभि: पूर्वं कृतानि पापानि एव रोगरूपेण बाधन्ते। आगता: रोग: इत: परं वा पुण्यकार्याणि कुर्वन्तु' इति जनान् जागरयन्ति । भवत: विषये किं वक्तव्यम्? धनसञ्चय तत्पर: भवान् कस्य अपि साहाय्यं न कृतवान्। भवत: पिता अपि एवं एव आसीत्। अन्ते स: मम आग्रहेण एव गोदानं कृत्वा रोगात् विमुक्त: आसीत्" इति।

गोपीनाथस्य पत्नीपुत्रा: अपि मात्रा यथा उक्तं तथा आचरतु इति पुन: पुन: अनुरोधपूर्वकम् उक्तवन्त:।

अन्ते गोपीनाथ: रामशर्मनामक ब्राह्मणम् आहूय आसन्नप्रसवां धेनुं दत्त्वा उक्तवान्- " भो: ब्राह्मणोत्तम! प्रसवानन्तरं धेनुं भवान् स्थापयतु। तर्णकं च



मह्यं प्रत्यर्पयतु। धेनुः केवलं भवते दत्ता, न तु जनिष्यमाणः तर्णकः अपि। एतत् मा विस्मरतु" इति।

तदा सम्भ्रान्तः रामशर्मा उक्तवान्- "भोः, मातापुत्रयोः वियोगसम्पादनं पापाय खलु? एवं कृतं चेत् उत्तमं फलं न लभ्यते इति अहं चिन्तयामि" इति।

"गावः अन्याः, मानवाः अन्ये। भवान् यत् वदति तत् मानवेषु युक्तम्। पशुषु एतत् न अन्वेति। अथवा भवान् एवं करोतु– यदा मातुः आवश्यकता समाप्ता भवति तदा एव तर्णकं ददातु। तदा दानपुण्यम् अवशिष्यते एव" इति।

रामशर्मा प्रतिवचनं वक्तुम् अनिच्छन् धेनुं स्वीकृत्य गतवान्। अनन्तरदिने एव गोपीनाथस्य उदरवेदना समूलम् अदृश्यता गता। अल्पेषु एव दिनेषु सः यथापूर्वं नित्यकार्येषु व्यापृतः अभवत् च। आरोग्यवन्तं तं दृष्ट्वा तदयिपत्नीपुत्रादयः सर्वे सन्तुष्टाः।

एतदनन्तरं केषुचित् दिनेषु दानरूपेण दत्ता धेनुः प्रसूतवती। तर्णकः पुमान् आसीत्।

'दानरूपेण दत्ता धेनुः मदीया न स्यात्। किन्तु तर्णकः तु मदीयः एव' इति चिन्तितवान् गोपीनाथः। अतः सः प्रतिदिनं रामशर्मणः गृहं गत्वा धेनुं तर्णकं च दृष्ट्वा 'तर्णकं सम्यक् पोषयन्तु' इति उक्त्वा आगच्छति।

दश–द्वादशदिनानि अतीतानि। एकदा गोपीनाथः रामशर्माणं पृष्टवान्- "ब्राह्मणोत्तम! धेनुः क्षीरं सम्यक् दोग्धि वा?" इति।

रामशर्मा तु अतीव दाक्षिण्यशीलः। सः उक्तवान्- " भोः, देवतांशसम्भूता एषा धेनुः। प्रतिदिनं द्रोणद्वयपरिमितं क्षीरं ददाति" इति।

वस्तुतः गौः तावत् क्षीरं न ददाति। गोपीनाथस्य सन्तोषार्थं तथा उक्तवान् आसीत् सः।

किन्तु तथाकथनम् एव तस्य कष्टाय अभवत्। रामशर्मणः वचनं श्रुत्वा गोपीनाथस्य हृदयं स्तब्धम् इव। यतः तदीयासु धेनुषु काऽपि तावत् क्षीरं न ददाति।

"धेनुः तावत् क्षीरं ददाति वा? तर्हि क्षीरं

तावत् रुचिकरं न स्यात्। तत् जलमयं स्यात् किल?" इति पृष्टवान् गोपीनाथः।

रामशर्मा 'आम् सत्यम्। क्षीरं जलमयम् एव' इति यदि वदेत् तर्हि गोपीनाथः तृप्तः अभविष्यत्। किन्तु तथा न जातम्।

सरलः रामशर्मा कृतज्ञताभावेन उक्तवान्- "श्रीमन्, शुद्धहृदयेन महात्मना दत्तायाः धेनोः माहात्म्यं किमिति वदामि? तस्याः क्षीरं तु अमृतसमानम्। देवैः सेव्यमानम् अमृतम् अपि एतावत् एव रुचिकरं स्यात्" इति।

तदा गोपीनाथः पृष्टवान् - " एवं तर्हि तस्याः क्षीरस्य रुचिम् अहम् अपि दृष्टुं शक्नोमि वा?" इति।

"किमर्थं न?" इति वदन् रामशर्मा अन्तः गत्वा एकचषकं क्षीरम् आनीय दत्तवान्। गोपीनाथः क्षीरं पीतवान्। क्षीरं रुचिकरं तु आसीत्।

खिन्नः गोपीनाथः गृहं प्रत्यागतवान्। तस्यां रात्रौ तस्य निद्रा एव नास्ति। 'कीदृशी उत्तमा धेनुः सा। तां दत्त्वा अहं मूर्खः सञ्जातः' इति व्यथितः सः।

अनन्तरदिने प्रातः एव गोपीनाथः रामशर्माणम् आहूय उक्तवान्- " भोः ब्राह्मणोत्तम ! केभ्यश्चित् दिनेभ्यः अहं केनचित् तीव्ररोगेण पीडितः अस्मि इति भवान् जानाति एव। ह्यः क्षीरं पीतवान् किल? तेन किञ्चित् उल्लाघता अनुभूता मया। वस्तुतः सा धेनुः देवतांशसम्भूता



एव। तस्याः क्षीरम् अमृतसमानम्। सा द्रोणद्वयपरिमितं क्षीरं ददाति किल? तत्र अर्धभागं मम गृहं प्रति प्रेषयतु। यावत् मम अनारोग्यं तावत् प्रेषयति चेत् पर्याप्तम्। एतेन भवतः अपि कापि हानि न भवेत्" इति।

एतस्य वचनस्य उत्तरं किं वक्तव्यम् इति न ज्ञातवान् रामशर्मा। निराकर्तुं न शक्यते। अनिवार्यतया अङ्गीकृत्य सः गृहं गतवान्।

गोपीनाथस्य वचनं श्रुत्वा माता कावेरी उक्तवती- " भोः, कीदृशी दुर्बुद्धिः भवतः। दानरूपेण दत्ताया धेनोः क्षीरं स्वीकरोति किल? तेन प्राप्तं पुण्यम् अपि नश्यति। पापसङ्ग्रहः भवति च" इति।

"यदि सङ्गृहीतं पुण्यं नश्येत् तर्हि पुनः



अपि रोगः बाधेत खलु। किन्तु तथा न जातम्। अतः पापसङ्ग्रहः न भवति, न वा पुण्यं नश्यति'' इति उक्तवान् गोपीनाथः।

तद्दिनतः रामशर्मा धेनोः क्षीरं समग्रं गोपीनाथाय ददाति स्म। धेनोः पोषणं केवलं तदीयम् अभवत्। दातुः सन्तोषार्थम् उक्तं वचनम् एव हानिकारकम् आसीत् इदानीम्।

अल्पे एव काले गोपीनाथः पुनः पूर्वतनया उदरवेदनया पीडितः अभवत्। एतेन सम्भ्रान्तः सः इतः परं क्षीरदानं मास्तु इति रामशर्माणं सूचितवान्। तथापि तस्य रोगः न शान्तः। वैद्यस्य औषधोपचारः अपि यथापूर्वं निष्फलः एव।

''रामशर्मणः सकाशात् इदानीं क्षीरं न स्वीकुर्वन् अस्मि। अतः मया गोदानस्य पुण्यं प्राप्तव्यम् आसीत् एव। तथापि एषः रोगःमां किमर्थम् एवं बाधते'' इति चिन्ताक्रान्तः अभवत् गोपीनाथः।

एकदा गोपीनाथस्य गृहस्य पुरतः स्थित्वा कश्चन संन्यासी उक्तवान्- ''भोः, अस्मिन् गृहे पापसञ्चयः दृश्यते, शीघ्रं निवारयतु'' इति।

तत् श्रुत्वा कावेरी झटिति बहिः आगत्य सन्यासिनम् अन्तः नीत्वा सत्कृत्य पुत्रं प्रदर्शितवती।

संन्यासी गोपीनाथं क्षणकालं परीक्षादृष्ट्या दृष्ट्वा उक्तवान् - ''भवान् गोदानेन पुण्यं तु न प्राप्तवान्। क्षीरं प्रति–स्वीकुर्वन् पापं सङ्गृहीतवान् अपि'' इति।

तदा गोपीनाथः दीनतया पृष्टवान्- ''स्वामिन्! एवं कथं प्रवृत्तम्? अत्र किं रहस्यम् अस्ति? मया या धेनुः दत्ता। तस्याः क्षीरस्य उपयोगं कुर्वन् अस्ति किल इदानीं रामशर्मा? तथापि किमर्थं रोगबाधा?'' इति।

''भोः, भवतः दुराशायाः युक्तं फलम् अनुभवन् अस्ति भवान्। पूर्वं तु गोदानेन यत् पुण्यं सम्पादितम् आसीत् तेन भवतः रोगः सम्पूर्णं शान्तः। एतेन भवान् यदि विवेकं प्राप्तवान् स्यात् तर्हि पुण्यफलं तथैव अवशिष्येत। किन्तु भवान् दुराशया दानरूपेण दत्तायाः धेनोः क्षीरं प्रतिदिनं पीतवान्। तेनः पूर्वतनः रोगः पुनः आगतः।

भवतः रोगः शान्तः चेत् भवान् पुनः अपि क्षीरं पृच्छेत् इति भीतः अस्ति रामशर्मा। सद्ब्राह्मणस्य मनसि उत्पन्ना भीतिः एव भवतः रोगस्य अपगमने विघ्नः इव आचरति'' इति उक्तवान् संन्यासी।

''एवं तर्हि इदानीं मया किं करणीयम्?'' इति भीत्या कम्पमानः गोपीनाथः पृष्टवान्।

''दानरूपेण दत्तायाः धेनोः क्षीरं यत् प्रति–स्वीकृतवान् तत् महते पापाय। एतस्य पापस्य निवारणार्थं पुनः अपि गोदानं करणीयम्, तदपि सद्ब्राह्मणाय एव'' इति उक्तवान् संन्यासी।

''तर्हि भवते एव धेनुं ददामि'' इति उक्तवान् गोपीनाथः।

''अहं तु संन्यासी। सर्वसङ्गपरित्यागी। अहं कदापि दानं न स्वीकरोमि'' इति उक्तवान् संन्यासी।

''तर्हि कस्मै पुण्यपुरुषाय ददामि? भवान् एव वदतु'' इति उक्तवान् गोपीनाथः।

''अस्मिन् ग्रामे विद्यमानेषु अतीव सज्जनः रामशर्मा एव। सः क्षीरदानेन पुण्यं सम्पाद्य पुण्यवान् सञ्जातः अपि। अतः तस्मै एव ददातु'' इति संन्यासी उक्तवान्।

संन्यासिनः कथनं शृण्वतः गोपीनाथस्य हृदये द्वन्द्वम्। सः मौनं स्थितवान् आसीत्।

तदा संन्यासी एव पुनः उक्तवान्- ''भवतः हस्ततः यः धेनुं स्वीकृतवान् आसीत् सः यदि क्षीरम् अन्यस्मै दानरूपेण दत्तवान् स्यात् तर्हि तत् पुण्यं भवान् अलभिष्यत। किन्तु भवान् एव क्षीरं रामशर्मतः स्वीकृतवान्। अतः दानपुण्यं रामशर्मणा प्राप्तम्। इतः परं वा भवान् दुराशां त्यक्त्वा धनव्यामोहेन विना जीवेत् तर्हि वरं भवेत्'' इति।

संन्यासिनः वचनानुसारम् एव गोपीनाथः रामशर्मणे अन्यां धेनुं दत्तवान्। ''तर्णकः अपि भवतः एव। पूर्णहृदयेन भवान् माम् आशिषा अनुगृह्णातु'' इति प्रार्थितवान् च।

एतदनन्तरं गोपीनाथस्य रोगः शान्तः। सः धर्मात्मा इति कीर्तिं प्राप्य सुखेन जीवितवान्।






# महाश्वकः

जयसागरदेशस्य राजा रत्नदेवः। अश्वानां सङ्ग्रहणे तस्य विशेषासक्तिः। तस्य अश्वशालायाम् अरब्बी पर्शिया जातीयाः अश्वाः, तथैव बर्मा, सयां, सिंहल, सिन्धु इत्यादिभ्यः प्रदेशेभ्यः आनीताः उत्तमाः अश्वाः च अपि आसन्।

यथा विविधजातीयाः उत्तमाः अश्वाः आसन् तथैव अश्वपालने निपुणाः, अश्वचिकित्सायां परिणताः, अश्वारोहणे समर्थाः च अनेके तस्य आस्थाने आसन्।

विविधजातीयानाम् अश्वानाम् आहारे अपि भेदः भवति एव। तदनुगुणम् आहारदाने प्राज्ञाः अपि तत्र आसन्। प्रतिदिनम् अङ्गमार्जनं कर्तुं समर्थाः अपि बहवः राज्ञा नियुक्ताः आसन्।

अन्यान्यदेशेषु अश्वसम्बन्धी परिणतः कोऽपि अस्ति इति वार्ता ज्ञाता चेत् राजा तस्मै पारितोषिकस्य अधिकवेतनस्य च आशां प्रदर्श्य स्वकीये आस्थाने नियोजयति। स्वदेशस्य जनानां परिणतिविषये तस्य विशेषादरः न आसीत्।

एकदा कश्चन गूढचारः आगत्य रत्नदेवं निवेदितवान्- "प्रभो, एकम् अश्वारोहिणं दृष्ट्वा आगच्छन् अस्मि। सः वैशालीनगरं प्रति प्रस्थितः। इदानीं तु विष्णुपुरे अस्ति। स्नेहितस्य विवाहनिमित्तं सप्ताहं यावत् तत्र स्थास्यति च। तस्य वैशिष्ट्यं यत् चतुर्विंशतिं घण्टाः यावत् सः निरन्तरम् अश्वप्रयाणं कर्तुं समर्थः। शीघ्रं गतं चेत् विष्णुपुरे एतं वीरं द्रष्टुं शक्नुमः" इति।

एतत् वचनं श्रुत्वा रत्नदेवः अतीव सन्तुष्टः। "अहो! बहोः कालात् अनन्तरम् एतादृशः अश्वारोही लब्धः। दिनद्वयं यावत् निरन्तरम् अश्वप्रयाणं कर्तुं समर्थः मम आस्थाने अस्ति इति कीर्तिः देशविदेशेषु प्रतिध्वनिता भविष्यति" इति उद्गारं

प्रकटितवान् सः।

अनन्तरं रत्नदेवः मन्त्रिणम् आहूय आज्ञापितवान्– "एतत्क्षणे एव वैशालीराज्यस्य गमनमार्गे स्थितं विष्णुपुरं प्रति कश्चन अश्वारोही प्रेषणीयः। एतेन अश्वारोहिणा, तत्रत्यः समर्थः अश्वारोही द्रष्टव्यः, सः अत्र कथञ्चित् आनेतव्यः च। सः महाशिवकः जयसागरे एव तिष्ठेत्" इति।

तदा मन्त्री किमपि वक्तुम् उद्युक्तः। राजा तु मन्त्रिणः कथनं निवारयन् असमाधानेन उक्तवान्- "व्यर्थवार्तालापार्थम् एषः न समयः। एतत्क्षणे एव एकम् अश्वारोहिणं विष्णुपुरं प्रेषयतु। सः महाशिवकं दृष्ट्वा 'रत्नदेवराजस्य आस्थानतः आगतवान् अस्मि' इति वदेत्। 'प्रतिमासं शतं सुवर्णनाणकानि वेतनरूपेण दीयन्ते' इत्यपि वदतु सः। मदीयाम् एताम् आज्ञां श्रावयित्वा कञ्चित् अश्वारोहिणं त्वरया प्रेषयतु" इति।

'यावत् कथनेन अपि प्रयोजनं नास्ति' इति ज्ञातवान् मन्त्री। अतः राजाज्ञां यथाश्रुतं श्रावयित्वा एकम् अश्वारोहिणं विष्णुपुरं प्रति प्रेषितवान्।

इतः सप्तमे दिने सः महाशिवकः विष्णुपुरतः रत्नदेवस्य आस्थानम् आगतवान्। महाराजेन दीयमानं वेतनम् अङ्गीकृतवान् च।

वैशालीराजस्य आस्थाने स्थातुं प्रस्थितः महाशिवकः जयसागरदेशस्य आस्थाने स्थातुं यत् अङ्गीकृतवान् तेन राजा रत्नदेवः



अतीव सन्तुष्टः।

सः नूतनः आश्विकः रत्नदेवम् उक्तवान्- "महाराज! वैशालीदेशस्य राजा आत्मनः आस्थाने मां नियोक्तुम् इच्छन् विष्णुपुरं प्रति दूतं प्रेषितवान् आसीत्। किन्तु ततः पूर्वं भवतः दूतः आगत्य भवदीयानि वचनानि निवेदितवान्। अतः अहं वैशाली-राज्यस्य दूतं प्रतिप्रेषितवान्, भवतः आस्थानम् आगतवान् च" इति।

एतत् श्रुत्वा इतोऽपि सन्तुष्टः रत्नदेवः मन्त्रिणम् उक्तवान्- "विष्णुपुरं गतवते अश्वारोहिणे किमपि विशेषपारितोषिकं ददातु" इति।

तदा मन्त्री उत्तरितवान्- "महाराज! अस्माभिः विष्णुपुरं प्रति प्रेषितः अश्वारोही त्रिदिनं यावत् अहोरात्रम् अश्वसञ्चारं कृतवान्। एतत् श्रुत्वा अतीव सन्तुष्टः वैशालीराजः, सन्तोषं वचनैः प्रकटीकृतवान्। 'अधिकं वेतनं ददामि' इति उक्त्वा तस्मै स्वकीये आस्थाने उद्योगं परिकल्पितवान् च। एषा वार्ता इदमिदानीं ज्ञाता। भवन्तं निवेदयितुम् एव अत्र उपस्थितः आसम्" इति।

तदा रत्नदेवः आश्चर्यं प्रकटयन्- "एवं वा? मम पौरेषु अन्यतमः एतावत्समर्थः वा? एवं तर्हि एतादृशाः इतोऽपि स्युः किल राज्ये? अन्यदेशीयेभ्यः अधिकं वेतनं दातुं मया वृथा व्ययः कृतः" इति उक्तवान्।

"युक्तम् उक्तं महाराजेन। मम अपि एषः एव अभिप्रायः। अश्वसञ्चारे समर्थानाम् अन्वेषणार्थं प्रोत्साहनार्थं च अस्माभिः विविधाः स्पर्धाः आयोजनीयाः। तत्र ये विशेषयोग्यतां प्रदर्शयन्ति तेभ्यः अधिकः पुरस्कारः दातव्यः" इति निवेदितवान् मन्त्री।

मन्त्रिणः सूचनानुसारं अश्वारोहिणां कृते विविधाः स्पर्धाः आयोजिताः। तस्य परिणामतः ज्ञातं यत् केचन जयसागरदेशस्य अश्वारोहिणः इतरदेशस्य अश्वारोहिणाम् अपेक्षया श्रेष्ठाः इति। द्वित्राः तु केषुचित् अंशेषु जगति एव अद्वितीयतां प्रदर्शितवन्तः।

एतया घटनया रत्नदेवस्य इतरदेशीयेषु आश्विकेषु मोहः अपगतः।






६

(चित्रसेनः स्वकीयैः अनुचरैः सह स्वभवनं गच्छन् आसीत्। अत्रान्तरे उग्राक्षस्य भटाः आगत्य तं पुनरपि स्वनायकसमीपं नीतवन्तः। तत्र चित्रसेनः व्याघ्रचर्मधारिणम् अमरपालनामकं दृष्टवान्। सः अमरपालः ज्वालाद्वीपविषयकं रहस्यं किञ्चित् उक्तवान् इव। अनन्तरं सः अकस्मात् आकाशं पश्यन् मूकः इव स्थितवान्। तदनन्तरम् ........)

कथनं मध्ये स्थगयित्वा आकाशं पश्यतः अमरपालस्य विचित्रव्यवहारं दृष्ट्वा चित्रसेनः आश्चर्यचकितः। उग्राक्षः तु महता कोपेन नेत्रे विशालम् उन्मील्य, दन्तान् आघट्टयन्, गदाम् उन्नीय परितः भ्रामयन् "भोः नराधम! किं जातं भवतः? किं पित्तोद्रेकः जातः? उत कण्ठे किमपि संलग्नम्? पश्यतु एतां गदाम्। एकेन प्रहारेण भवतः पित्तविकारं दूरीकरोमि वा?" इति गर्जितवान्।

अमरपालः तस्य वचनम् अश्रुतवान् इव आसीत्। सः किञ्चिदपि न भीतः। आकाशे स्थितां दृष्टिम् उग्राक्षस्य दिशि परिवर्तयन् सः मन्दहासपूर्वकम् उक्तवान् "किं मां प्रहरति भवान्? मां मारयितुम् इच्छति वा? मारयतु नाम। किन्तु भवान् अपि सद्यः एव घोरमरणं प्राप्नुयात् एव। कपिलपुरं वशीकृतवन्तं




नागवर्माणं स्मरति किल भवान्? नागवर्म-साहाय्यकैः ज्वालाद्वीपवासिभिः तेषां वाहनैः पक्षिभिः च कृतान् व्रणान् पश्यतु भवान्। अविवेकेन न व्यवहरतु। मम यत् श्रवणपाटवम् अस्ति तत् भवत्सु कस्यापि नास्ति इति जानातु'' इति।

'मम व्रणान् दृष्ट्वा एषः मानवशिशुः माम् उपहसति' इति चिन्तयतः उग्राक्षस्य कोपः अधिकः एव जातः। सः गदया अमरपालस्य शिरः भञ्जयितुम् इच्छन् हुङ्कारं कुर्वन् अग्रे पदं स्थापितवान्।

अत्रान्तरे चित्रसेनः उग्राक्षस्य अमरपालस्य च मध्ये स्थित्वा आज्ञास्वरेण उच्चैः उक्तवान्-''तिष्ठतु उग्राक्ष!'' इति।

''अल्पः एषः मानवाधमः माम् उपहसन् अस्ति। तत् श्रुत्वा अपि मया तूष्णीं स्थातव्यं वा ?'' इति कोपाधिक्येन एव पृष्टवान् उग्राक्षः।

''उग्राक्ष! युक्तायुक्तविवेकं न त्यजतु। मानवः इति उपेक्षा मास्तु। यतः एषः अस्माकम् उपकारकः भवेत् इति मम आशा। पूर्णतः परीक्षा यावत् न समाप्यते तावत् सहनया तिष्ठतु। यदि एषः उपयोगाय न भवति इति निश्चयः भवति तर्हि यथेष्टं चित्रहिंसां ददातु'' इति उक्तवान् चित्रसेनः।

चित्रसेनस्य वचनं श्रुत्वा भीत्या कम्पमानः अमरपालः दीनतया उक्तवान्-''महाराज! एतत् तु अनुचितम्। भवता अभयं दत्तम् इति कारणतः एव अहं वृक्षात् अवतीर्य स्थितवान्। अन्यथा राक्षसानां हस्ततः आत्मानं रक्षन् आत्महत्यया मरणं प्राप्नुयाम्। माम् एतेषां राक्षसानां चित्रहिंसायाः लक्ष्यं न करोतु महाराज! दत्तं वचनं स्मरतु'' इति।

''भवतः प्राणापायस्य भीतिः मास्तु इति वदता मया अभयं दत्तम् इति तु सत्यम् एव। किन्तु भवता एतस्य प्रतिफलरूपेण सर्वं वक्तव्यम् आसीत् किल? भवान् तु आकाशं पश्यन् अस्मभ्यः किमपि गोपयन् अस्ति इव। वञ्चनां कुर्वते भवते दत्तस्य वचनस्य पालनं करणीयम् इति नास्ति एव। एतत् भवान् सम्यक् जानातु'' इति कठिनस्वरेण उक्तवान् चित्रसेनः।

"क्षाम्यतु महाराज! एतत्क्षणतः अहं भवतः पादसेवकः। राजद्रोहिणः नागवर्मणः विषये मम कोऽपि गौरवभावः नास्ति। ज्वालाद्वीपवासिनां विषये मम पूर्वम् अपि कोपः आसीत् एव। किन्तु असहायतया तेषां पक्षम् आश्रितवान्। अन्यथा कुत्र आश्रयः आसीत् मम? इतः आरभ्यः अहं भवतः पादसेवकः। मम श्रवणशक्तिः सूक्ष्मा। आकाशे कश्चन शब्दः श्रुतः इव। अतः तथा आचरितवान्" इति दीनस्वरेण उक्तवान् अमरपालः।



"एवं तर्हि यावत् जानाति तावत् स्पष्टतया वदतु। धवलगिरेः उपरि आक्रमणं कुर्वतः नागवर्मणः सैन्ये भयङ्कर पक्षिवाहनाः ज्वालाद्वीपवासिनः अपि सन्ति वा?" इति पृष्टवान् चित्रसेनः।

"ते अपि स्युः। कपिलपुरसमीपे स्थिते अरण्ये शतशः पक्षिवाहनाः वसतिं कल्पितवन्तः सन्ति। तेषां साहाय्यार्थं नागवर्मा कांश्चन नागरिकान् नियोजितवान् अस्ति। प्रत्युपकाररूपेण ज्वालाद्वीपवासिनः नागवर्मणः साहाय्यं कुर्वन्ति। एवं परस्परं साहाय्यं तयोः" इति उक्तवान् अमरपालः।

"एतेषां भयङ्करपक्षिणां मारणे कोऽपि सुलभः मार्गः अस्ति वा?"इति उग्राक्षः शान्तस्वरेण पृष्टवान्।

कोपावेशेन अङ्गचालनं कृतम् इति कारणतः व्रणानाम् उपरि स्थापिताः बन्धाः शिथिलाः आसन्। इदानीं कोपस्य उपशमनानन्तरम् सः बन्धान् पुनः दृढीकुर्वन् उपरितनं प्रश्नं पृष्टवान् आसीत्।

"किमर्थं न स्यात्? वेगेन सञ्चरतां तेषां चञ्चूभ्यः नखेभ्यः च आत्मानं रक्षन् कोऽपि आक्रमणं कुर्यात्। कण्ठस्य उपरि बलेन प्रहारं कुर्यात् च। सर्वेषाम् अपि प्राणिनां कण्ठप्रदेशः अतीव सूक्ष्मः किल?" इति उक्तवान् अमरपालः।

"हो हो हो" इति उच्चैः हसन् उग्राक्षः-"इदानीं ज्ञातं तेषां मारणरहस्यम्। इतः परं यदा ते आगच्छन्ति तदा प्रदर्शयिष्यामि मम हस्तकौशलम्" इति




उक्त्वा भुजास्फालनं कृतवान्।

अत्रान्तरे केचन राक्षसाः पौराः च आपदा पीडिताः इव आक्रन्दनं कुर्वन्तः "महाराज! महाराज! महती आपत्" इति वदन्तः तत्र आगतवन्तः।

प्राणभीत्या हाहाकारं कुर्वतः एतान् जनान् राक्षसान् च दृष्ट्वा चित्रसेनः चिन्तितवान्-'कोऽपि नूतनः अपायः आगतः' इति।

"महाराज! अनतिदूरे महावटस्य समीपे वयं पशुचारणं कुर्वन्तः आस्म। अस्माकम् उपरि भयङ्करपक्षिणः व्याघ्रचर्मधारिणः च आक्रमणं कृतवन्तः। ते अस्माकं जनान् पशून् च नयन्तः सन्ति। वयं केचन कथञ्चित् आत्मानं रक्षन्तः पलायनं कृतवन्तः। ते दुष्टाः अत्रापि आगच्छेयुः। इदानीं भवान् एव शरणम्" इति चित्रसेनम् उक्तवन्तः भीताः ते पौराः।

राक्षसाः अपि उग्राक्षम् आत्मनः कष्टं निवेदितवन्तः। किन्तु ते राक्षसाः वस्तुतः पशुत्राणार्थं गताः न। अति तु गोप्यतया पशून् अपहर्तुं गताः एव। तस्मिन् एव समये व्याघ्रचर्मधारिणः आक्रमणं कृतवन्तः। तदा एते पीडिताः व्रणिताः च।

"चित्रसेन! इदानीम् अस्माभिः पशुपालकानां रक्षणर्थं गन्तव्यं भवेत् किल?" इति निरुत्साहपूर्णेन स्वरेण पृष्टवान् उग्राक्षः।

"गमनं विना किम् अन्यत्? ते दुष्टाः अस्माकं नागरिकान् पीडयन्तः सन्ति। एवं स्थिते वयं किं तूष्णीं स्थातुं शक्नुयाम वा?" इति कोपमिश्रितस्वरेण पृष्टवान् चित्रसेनः।

अनन्तरं चित्रसेनः महावटस्य दिशि प्रस्थितवान् एव। तदा उग्राक्षः अपि कृतकगाम्भीर्यं प्रदर्शयन् अनिवार्यतया चित्रसेनम् अनुसृतवान्। इतरे तौ अनुसृतवन्तः।

वृक्षाणां मध्ये ते अग्रे गतवन्तः। तत्समये अमरपालः अग्रे आगत्य -"महाराज! मम एका विज्ञापना। अस्माकं गमनतः पूर्वम् एव ते दुष्टाः स्वकार्यं समाप्य प्रस्थिताः स्युः एव।

यदि ते तत्रैव स्युः चेदपि वयं विशेषतः किमपि कर्तुं न शक्नयाम। आक्रमणं प्राणहानिकारकं भवेत्, तावदेव" इति उक्तवान्।

उग्राक्षः एतत् अङ्गीकृत्य शिरः चालयन्- "आं चित्रसेन! अमरपालवचनं सत्यम् अस्ति। अविवेकेन न व्यवहर्तव्यम्। रात्रेः घटना अत्र उदाहरणम्" इति उक्तवान्।

अमरपालस्य उग्राक्षस्य च वचनस्य श्रवणानन्तरं चित्रसेनस्य अपि आक्रमणविषये आग्रहः न्यूनः जातः।

'अविवेकेन पौरान् राक्षसान् च यदि युद्धे प्रेरयेम तर्हि कः लाभः? वृथा प्राणापायः भवेत्। वस्तुतः ज्वालाद्वीपवासिनां विरोधः मया किमर्थं वा सम्पादनीयः?' इत्येवं चिन्तितवान् चित्रसेनः।

किन्तु तन्मध्ये अन्योऽपि विचारः आगतः -"राजा अहं यदि हताशभावनया प्रजानां रक्षणे असहायकतां प्रदर्शयामि तर्हि कियत्कालं वा राज्यं शासितुं शक्नुयाम्? नागवर्मा इदानीं मम पितुः देशस्य उपरि आक्रमणं कृतवान्। सद्यः एव मम राज्यस्य उपरि अपि आक्रमणं न कुर्यात् इत्यत्र कः विश्वासः?" इति।

एवं चित्रसेनः आतङ्केन भयेन च चिन्तामग्नः आसीत्। तदा अमरपालः



उक्तवान्- "महाराज! अहं तु भवतः सेवकः। यदि भवान् अग्नौ पतितुं वदेत् तर्हि तदपि कुर्याम् एव। अत्र संशयः एव नास्ति। सद्यःकरणीयविषये मम अभिप्रायः यत् कपिलपुरपार्श्वस्थे अरण्ये स्थितस्य शत्रुशिबिरस्य उपरि आक्रमणं कृत्वा कपटोपायेन ते भयङ्करपक्षिणः नाशनीयाः। अनन्तरं व्याघ्रचर्मधारिणां नाशनं न क्लेशाय" इति।

"तत्र शतशः भयङ्करपक्षिणः सन्ति इति भवान् एव वदति। पक्षिद्वयस्य आक्रमणेन एव अत्र महोत्पातः सञ्जातः इव। एवं स्थिते तेषां सर्वेषां मारणं किं शक्यम्?" इति सन्देहं प्रकटितवान् चित्रसेनः।



"तेषां पक्षिणां मारणे अन्यः एव सुलभोपायः अस्ति महाराज!" इति उक्तवान् अमरपालः।

"कः सः सुलभोपायः?" इति कातरस्वरेण पृष्टवान् चित्रसेनः।

तदा अमरपालः परितः पश्यन् उक्तवान्- "महाराज! कपिलपुरसमीपे अरण्ये ते भयङ्करपक्षिणः सन्ति इति अहम् उक्तवान् किल? तत्र ते गोष्ठेषु दृढाभिः शृङ्खलाभिः बद्धाः सन्ति। तेषां यजमानाः तु तत्पार्श्वे एव निवसन्ति। यदा राक्षसपक्षिणः गोष्ठे भवन्ति तदा एव ते मारणीयाः" इति।

"विचारः तु समीचीनः एव। किन्तु अत्र कः मार्गः?" इति पृष्टवान् चित्रसेनः।

"तदर्थं मया कश्चन मार्गः चिन्तितः अस्ति अपि" इति अमरपालः यावत् वदन् आसीत् तावता पुरतः स्थितस्य वृक्षसमूहस्य पार्श्वे कोलाहलः श्रुतः।

चित्रसेनः उग्राक्षः तदनुचराः च झटिति तस्यां दिशि धावितवन्तः। वृक्षसमूहे निलीय शाखादिकम् अपसार्य दृष्टवन्तः। तैः तत्र किञ्चन भीकरं दृश्यं दृष्टम्।

केचन भयङ्करपक्षिणः अजान् धेनूः च नखैः गृहीत्वा कुक्कुटशावकान् इव निरायासेन नयन्तः आसन्। पक्षिणाम् उपरि उपविष्टाः व्याघ्रचर्मधारिणः उच्चैः हर्षोद्गारं प्रकटयन्तः विरोधं प्रकटयतां पशुपालकानाम् उपरि शूलायुधानि क्षिपन्ति स्म। एकैकस्य अपि व्याघ्रचर्मधारिणः समीपे शतशः शूलायुधानि आसन्। केचन धैर्यशालिनः पशुपालकाः तु वेगेन शिलाखण्डान् क्षिपन्तः आसन्। धेनवः अजाः च भीत्या इतस्ततः धावन्ति स्म।

एतत् भीकरं दृश्यं दृष्ट्वा चित्रसेनः दिग्भ्रान्तः। उग्राक्षः तु कोपावेशेन गदया एकवारं भूमिं बलात् घट्टयित्वा गर्जनपूर्वकं किमपि वक्तुम् उद्युक्तः। तदा चित्रसेनः स्वहस्तेन तस्य मुखं दृढं पिधाय -"अनिष्टं सर्वं तु सम्पन्नम् एव। इदानीं भवान् गर्जनेन तेषां लक्ष्यम् अत्र आकर्षन् अस्ति किल। एतेन अस्माकं हानिः एव। सद्यः कर्तव्यं तु कोपगर्जनं न, अपि तु व्रणितानां पशुपालकानां प्रथमोपचारः, तेषु धैर्यपूरणं च" इति उक्तवान्।

चित्रसेनस्य वचनसमनन्तरम् एव तदनुचराः राक्षसाः च अग्रे गन्तुम् उद्युक्ताः।

तदा चित्रसेनः तेषां गमनं निवारयन् उक्तवान् -"प्रथमं तावत् ते दुष्टाः सर्वे निर्गच्छन्तु नाम। इदानीं त्वरया किमपि प्रयोजनं नास्ति" इति।

ज्वालाद्वीपवासिनः दृष्टिपथात् यदा अपगताः तदा राक्षसाः चित्रसेनपक्षीयाः च अग्रे गत्वा व्रणितानां चिकित्सां कृतवन्तः। औषधिरसं लेपयित्वा व्रणस्य उपरि पट्टिकां बद्धवन्तः च।

उग्राक्षः निरुत्साहेन कस्यचित् वृक्षस्य अधः उपविश्य उक्तवान्- "चित्रसेन! अनिर्वचनीयेन भयेन अहम् आवृतः अस्मि। एते पातकिनः अस्माकं राज्यतः यथा निर्गच्छेयुः तथा कोऽपि उपायः चिन्तनीयः। यदि मौनं तिष्ठामः तर्हि परिस्थितिः दिने दिने गम्भीरा एव भवेत्। अस्माकं पुरतः एव कीदृश्यः दुर्घटनाः! कियत् अपमानकरम् एतत्!" इति।

"आम् आम्। उपायः यावच्छीघ्रं चिन्तनीयः एव" इति उक्त्वा चित्रसेनः अमरपालं पश्यन् -"अमरपाल! ते भयङ्करपक्षिणः गोष्ठे एव नाशनीयाः इति उक्तवान् किल? तदर्थं कोऽपि उपायः अस्ति इत्यपि सूचितवान्। कः उपायः सः?" इति पृष्टवान्।

"यदा ते राक्षसपक्षिणः गोष्ठे बध्दाः भवन्ति तदा अग्निस्पर्शः करणीयः। एतद्विना कोऽपि अन्यः मार्गः नास्ति" इति उक्तवान् अमरपालः।

"तत् कथं शक्येत? यतः रक्षकभटाः सदा गोष्ठस्य रक्षणं कुर्वन्तः एव भवन्ति किल?" इति सन्देहेन पृष्टवान् चित्रसेनः।

"किमर्थं वा न शक्यते? मया सह पञ्चषान् सैनिकान् प्रेषयतु। अहं कपिलपुरस्य अरण्यं प्रविश्य रक्षकभटान् मारयित्वा भयङ्करपक्षिणः सजीवं दहामि। अत्र भवतः संशयः एव मास्तु। आज्ञादानेन माम् अनुगृह्णातु महाराज!" इति निवेदितवान् अमरपालः।

(अनुवर्तते)






# वचनभङ्गः

असाध्यपदम् अजानन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। पुनः यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्- "अये राजन्, अस्मिन् मध्यरात्रे घनान्धकारे एकाकी भवान् यत् अटति तेन अहं चिन्तयामि– भवान् किमपि कार्यविशेषं साधयितुम् एव प्रवृत्तः इति। किन्तु एषः निश्चयः फलप्राप्तिपर्यन्तं तिष्ठेत् वा? लोके कार्यसाधनार्थं स्थिरबुद्धिः, नीतिमार्गानुसरणं, वचनपरिपालनं, प्रामाणिकता च अत्यवश्यम्। यस्मिन् एते गुणाः न भवन्ति सः अल्पव्याजेन कार्यं त्यजति एव। अत्र उदाहरणरूपेण विजयपुरस्य राजकुमार्याः कथां श्रावयामि। कथां शृण्वतः भवतः मार्गायासः अपि परिहृतः भवेत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

## वेतालकथा



कदाचित् सायङ्कालसमये विजयपुरस्य राजकुमारी सुवर्णदेवी मातुलगृहतः प्रत्यागच्छन्ती आसीत्। दृढकायाः चत्वारः भटाः राजकुमार्या उपविष्टां शिबिकाम् उन्नीय नयन्तः आसन्। पार्श्वद्वये अपि तस्याः सख्यः अङ्गरक्षकभटाः च आसन्। चलनानुगुणं भटाः उच्चैः हूङ्कारं कुर्वन्ति स्म।

राजधानीगमनतः पूर्वं ते पर्वतस्य खातं प्रविष्टवन्तः। खातस्य पार्श्वद्वये अपि बृहत्शिलाखण्डाः आसन्। तदा अकस्मात् शिलाखण्डानां पृष्ठभागतः भयानकः शब्दः श्रुतः। एतेन सर्वेऽपि सम्भ्रान्ताः।

तावति काले एव केचन मार्गचोराः खड्गान् स्वीकृत्य शिबिकायाः उपरि आक्रमणं कृतवन्तः। रणरङ्गः इव सञ्जातः सः प्रदेशः।

अङ्गरक्षकभटाः चोरान् निवारयितुं प्रयत्नं कृतवन्तः। किन्तु चोराः अधिकसङ्ख्याकाः आसन्। ते राजभटान् जित्वा राजकुमार्याः सुवर्णदेव्याः शिबिकायाः द्वारम् उद्घाटयितुम् उद्युक्ताः। सीत्कारं कुर्वतीः सखीः तर्जयन्ति स्म चोराः।

तस्मिन् क्षणे पर्वतस्य उपत्यकाप्रदेशतः कर्कशध्वनिना भयम् उत्पादयन्तः शिलाखण्डान् लुण्ठयन्तः केचन आगतवन्तः। शिलाखण्डानाम् अधः पतित्वा चोरनायकः अन्यौ चोरौ च मृताः।

अन्ये चोराः सम्भ्रान्ताः। 'का एषा नूतना आपत् आगता' इति चिन्तयन्तः ते परितः दृष्टवन्तः।

एतान् नूतनान् दृष्ट्वा चोराः भयेन पलायितुम् उद्युक्ताः। तावति काले केचन युवकाः आगत्य तान् गृहीतवन्तः।

एतत् दृष्ट्वा आश्चर्यचकिताः राजकुमार्याः अङ्गरक्षकाः अपि धैर्येण अग्रे आगत्य साहसं कृतवन्तः। क्षणे एव चोराणाम् आयुधानि एतेषाम् अधीनानि जातानि। किमपि कर्तुम् असमर्थाः चोराः एतेषां जाले पतिताः।

राजकुमार्याः सुवर्णदेव्याः रक्षणार्थम् आगता एते युवकाः राजधानीं गतवन्तः आसन्। तत्र प्रचलिते युद्धविद्याप्रदर्शने भागम् ऊढ्वा इदानीं स्वदेशं प्रति प्रस्थिताः आसन्। तेषां

नायकः शेखरः।

केभ्यश्चित् दिनेभ्यः पूर्वं विजयपुरराज्ये विद्यमानान् सर्वान् मल्लान् जित्वा राजकुमार्याः हस्ततः एव पारितोषिकं प्राप्तवान् आसीत् सः। इदानीम् तु नगरसन्दर्शनं कृत्वा वीरैः सह वनविहारार्थं प्रस्थितः आसीत् च।

सुवर्णदेव्या सह केचन राजभटाः नगरं प्रस्थिताः। शेखरः तस्य अनुचराः च चोराः यथा पलायनं न कुर्युः तथा रक्षणार्थं स्थितवन्तः। द्वौ आश्विकौ केवलं सुवर्णदेवीम् अनुसृतवन्तः।

"तान् चोरान् गृहीत्वा आनयन्तु" इति सैनिकान् आज्ञापितवान् राजा। सैनिकाः रज्ज्वा बद्ध्वा सर्वान् चोरान् राजधानीं नीतवन्तः। शेखरः अपि अनुचरैः सह राजधानीं गतवान्।

परेद्युः राजा शेखरम् आहूय अभिनन्दनानि उक्त्वा "भवता कृतस्य साहाय्यस्य किं पारितोषिकं ददामि" इति पृष्टवान्।

तदा शेखरः प्रार्थितवान्- "महाराज, राजकुमार्या सह सम्भाषणं कर्तुं अनुमतिं ददातु कृपया। मम पारितोषिकं तस्याः सकाशतः एव स्वीकरोमि" इति।

राजा अनुमतिपूर्वकं तं पुत्र्याः समीपं प्रेषितवान्।

सुवर्णदेवी शेखरं कृतज्ञतवचनानि उक्त्वा "भवान् कीदृशं पारितोषिकम् इच्छति?" इति पृष्टवती।

"अहं यत् पृच्छामि तत् निश्चयेन ददामि इति वचनं ददाति वा भवती?" इति





प्रतिप्रश्नं कृतवान् शेखरः।

"यदि अहं दातुं समर्था तर्हि निश्चयेन वचनं ददामि। तत्र संशयः मास्तु" इति उक्तवती सुवर्णदेवी।

तस्याः वचनेन सन्तुष्टः शेखरः उक्तवान्- "युवराज्ञि, अहं तु भवत्याः परिचितः एव। इतः पूर्वं भवत्याः हस्ततः एव अहं पारितोषिकं प्राप्तवान् अस्मि। चोरेभ्यः भवतीं रक्षितवतः मम धैर्यसाहसयोः विषये भवत्याः अभिप्रायः कः?" इति

"भवतः धैर्यम्, साहसः समयस्फूर्तिः एते सर्वेऽपि प्रशंसायोग्याः एव। तत्र सन्देहः नास्ति। एतादृशं प्रशंसापारितोषिकम् एव इच्छति वा भवान्?" इति पृष्टवती सुवर्णदेवी।

"तथा न, भवत्याः अभिमानपूर्वकेण वचनेन धन्योऽस्मि। भवती मां परिणयतु इति प्रार्थयामि। एतत् भवत्या शक्यते इति चिन्तयामि" इति उक्तवान् शेखरः।

एताम् अपेक्षां श्रुत्वा सुवर्णदेवी किञ्चित्कालं मौनं स्थित्वा उक्तवती- "एतत् मया शक्यते वा न वा इति न जानामि। तथापि भवन्तं परिणेतुं मम आक्षेपः नास्ति। किन्तु प्रथमं एतं विषयं मम पितरं निवेदयितुम् इच्छामि। अनन्तरम् एव स्वाभिप्रायं प्रकटयितुं शक्नोमि" इति।

राजकुमार्याः वचनेन शेखरः सन्तुष्टः अभवत्। तद्दिने रात्रौ एव सा पितरम् उक्तवती- "पितः, भवतः अनुमतिं स्वीकृत्य शेखरः मां द्रष्टुम् आगतवान्। सः मार्गचोरेभ्यः मम प्राणान् आभरणानि च रक्षितवान्। यदि ते दुष्टाः मम उपरि बलात्कारम् अकरिष्यन् तर्हि अहं विषगुलिकया प्राणत्यागम् अकरिष्यम्।

इदानीं शेखरस्य इच्छा नाम 'मया सः परिणेतव्यः' इति। भवतः अभिप्रायः कः? किम् अहं तस्य प्रार्थनाम् अङ्गीकरोमि?" इति।

एतेन किञ्चित् आश्चर्यचकितः राजा पृष्टवान्- "भवती शेखरं परिणेतुम् इच्छति वा? 'भवन्तं परिणेष्यामि' इति शेखराय इतः

पूर्ववचनं किमपि दत्तवती वा? तथा चेत् स्पष्टं वदतु" इति।

"पितः, राजकुमारः एव परिणेतव्यः इति मम अभिप्रायः तु नास्ति। शेखरसदृशं कमपि वीरं धैर्यशालिनं गुणवन्तं परिणेतुं मम आक्षेपः अपि नास्ति। अतः अहं शेखरं परिणेतुम् इच्छामि" इति उक्तवती सुवर्णदेवी।

"अस्तु, एतस्मिन् विषये चिन्तयामः" इति उक्तवान् राजा।

परेद्युः राजा शेखराय वार्तां प्रेषितवान् यत् राजकुमार्या सुवर्णदेव्या सह विवाहः न शक्यते इति।

एतेन खिन्नः शेखरः राजकुमार्याः समीपं गत्वा राज्ञा प्रेषितां वार्ताम् उक्त्वा "भवती मां न परिणेष्यति चेत् मम मरणम् एव गतिः" इति उक्तवान्।

राजकुमारी तं सान्त्वयन्ती उक्तवती— "निराशया एतावान् खिन्नः न भवतु। मम पिता यथा अङ्गीकुर्यात् तथा प्रयत्नं करोमि" इति।

एतेन वचनेन तृप्तः शेखरः स्वग्रामं गतवान्।

एकं वर्षम् अतीतम् । एकदा अकस्मात् रोगेण पीडितः राजा सुवर्णदेवीम् उक्तवान्- "पुत्रि, एतेन रोगेण अहं मुक्तः भविष्यामि इति मम विश्वासः नास्ति। योग्यं वरं दृष्ट्वा



शीघ्रातिशीघ्रं भवत्याः विवाहः करणीयः" इति।

शेखरविषये पितरं वक्तुम् उद्युक्ता सुवर्णदेवी। तावति काले पिता तस्य विषये विस्मृतवान् स्यात् इति चिन्तयित्वा सा मौनं स्थितवती।

पुनः एकदा सा आत्मनि धैर्यं पूरयित्वा शेखरविषयं स्मारयितुम् एव पितुः समीपं गतवती। किन्तु तदा एका विपद्घटना प्रवृत्ता।

सुवर्णदेव्याः सहोदरः गुरुकुले विद्याभ्यासं समाप्य आगमनसमये अश्वात् पतित्वा मृतः। एतां दुःखवार्तां श्रुत्वा व्याधिपीडितः



राजा हृदयाघातेन मृतः।

एतेन प्रसङ्गेन राजकुमारी दुःखेन व्यथिता। किन्तु सिंहासनस्य उत्तराधिकारित्वं स्वकीयम् एव इति कर्तव्यं स्मृतवती सा श्रध्दया पट्टाभिषेकं कारयित्वा राज्ञीपदव्या सिंहासनम् आरूढवती।

एवमेव बहूनि दिनानि अतीतानि। सुवर्णदेवी समर्थं कञ्चित् सेवकं शेखरस्य ग्रामं प्रेषितवती।

किन्तु शेखरः तं ग्रामं त्यक्त्वा कुत्रापि गतवान् आसीत्। सेवकः आगत्य एतां वार्तां निवेदितवान्। शेखरस्य आगमनपर्यन्तम् अपि निरीक्षा करणीया इति चिन्तितवती राज्ञी।

कदाचित् सा चिन्तितवती यत् स्वराज्ये नागरिकाः कथं सन्ति ? तेषां परिस्थितिः स्वयं द्रष्टव्या इति। एवं विचिन्त्य सा वेषान्तरेण प्रस्थितवती। राज्यसीमायां विद्यमानं कञ्चन ग्रामं गतवती। तस्मीन् ग्रामे प्रसिध्दः शिवालयः आसीत्। शिवरात्रिदिने प्रधानतया स्त्रियः तत्र गत्वा भक्त्या श्रद्धया च शिवपूजां कुर्वन्ति स्म।

तस्य प्रान्तस्य पर्वतप्रदेशो केभ्यश्चित् दिनेभ्यः मार्गचोराणां पीडा अधिका आसीत्। ये देवालयं गच्छन्ति तेषां समीपे अमूल्यवस्तूनि न भवन्ति इति कारणतः ते केवलं निर्भयेन गमनागमनं कुर्वन्ति स्म। सुवर्णदेवी अपि तैः सह एव किञ्चिद्दूरं प्रयाणं कृतवती। तावति काले चोराः एतेषाम् उपरि आक्रमणं कृतवन्तः।

चोराः आयुधानि प्रदर्श्य सुवर्णदेवीं भापितवन्तः। एकस्मिन् अश्वशाकटे ताम् उपवेश्य पर्वतस्य कोणे विद्यमानं एकं गृहं नीत्वा उक्तवन्तः-"भयं मास्तु, भवत्याः हितार्थम् एव अत्र आनीतवन्तः" इति।

एका घण्टा अतीता। तावति काले चोरनायकः तत्र आगतवान्। सः सुवर्णदेवीं परीक्षादृष्ट्या पश्यन् उक्तवान्- " अहम् एकां सुन्दरीं परिणेतुम् इच्छामि। मम अनुचराः सुन्दरीम् एव आनीतवन्तः। अन्यच्च पूर्वं कदाचित् भवतीं दृष्टवान् अहम् इति भाति" इति।

पूर्ववचनं किमपि दत्तवती वा? तथा चेत् स्पष्टं वदतु" इति।

"पितः, राजकुमारः एव परिणेतव्यः इति मम अभिप्रायः तु नास्ति। शेखरसदृशं कमपि वीरं धैर्यशालिनं गुणवन्तं परिणेतुं मम आक्षेपः अपि नास्ति। अतः अहं शेखरं परिणेतुम् इच्छामि" इति उक्तवती सुवर्णदेवी।

"अस्तु, एतस्मिन् विषये चिन्तयामः" इति उक्तवान् राजा।

परेद्युः राजा शेखराय वार्तां प्रेषितवान् यत् राजकुमार्या सुवर्णदेव्या सह विवाहः न शक्यते इति।

एतेन खिन्नः शेखरः राजकुमार्याः समीपं गत्वा राज्ञा प्रेषितां वार्ताम् उक्त्वा "भवती मां न परिणेष्यति चेत् मम मरणम् एव गतिः" इति उक्तवान्।

राजकुमारी तं सान्त्वयन्ती उक्तवती– "निराशया एतावान् खिन्नः न भवतु। मम पिता यथा अङ्गीकुर्यात् तथा प्रयत्नं करोमि" इति।

एतेन वचनेन तृप्तः शेखरः स्वग्रामं गतवान्।

एकं वर्षम् अतीतम् । एकदा अकस्मात् रोगेण पीडितः राजा सुवर्णदेवीम् उक्तवान्- "पुत्रि, एतेन रोगेण अहं मुक्तः भविष्यामि इति मम विश्वासः नास्ति। योग्यं वरं दृष्ट्वा



शीघ्रातिशीघ्रं भवत्याः विवाहः करणीयः" इति।

शेखरविषये पितरं वक्तुम् उद्युक्ता सुवर्णदेवी। तावति काले पिता तस्य विषये विस्मृतवान् स्यात् इति चिन्तयित्वा सा मौनं स्थितवती।

पुनः एकदा सा आत्मनि धैर्यं पूरयित्वा शेखरविषयं स्मारयितुम् एव पितुः समीपं गतवती। किन्तु तदा एका विपद्घटना प्रवृत्ता।

सुवर्णदेव्याः सहोदरः गुरुकुले विद्याभ्यासं समाप्य आगमनसमये अश्वात् पतित्वा मृतः। एतां दुःखवार्तां श्रुत्वा व्याधिपीडितः

वेतालः एवं कथां समाप्य पृष्टवान्- "महाराज ! राजकुमार्याः सुवर्णदेव्याः कृत्यं नीचं किल? सा विश्वासघातुका किल? 'शेखरं परिणेष्यामि' इति सा वचनं दत्तवती। तस्य अन्वेषणार्थं सेवकम् अपि प्रेषितवती। यदा शिवालयसमीपे यात्रिकैः सह एषा आसीत् तदा शेखरस्य अनुचराः तां गृहीत्वा नीतवन्तः। तदा एषा द्रोहं कृतवती। एषः वचनभङ्गः किल? 'परस्परं दर्शनं विधिविलासः' इति शेखर-वचनं सा अपि अङ्गीकृतती। किमर्थं तस्य विरोधम् आचरितवती? एतस्य सन्देहस्य उचितम् उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान्- "शेखरः चोरेभ्यः मां रक्षितवान् इति कृतज्ञताभावना सुवर्णदेव्याः आसीत् एव। अतः एव विवाहार्थं तेन यदा पृष्टं, तदा एषा अङ्गीकृतवती। सः धैर्यवान, साहसवान् नीतिमान् च इति सा जानाति। किन्तु इदानीं सः दरिद्रान्, निरायुधान् प्रयाणिकान् च पीडयन् चोरनायकः सञ्जातः। सुवर्णदेवी परिणेष्यामि' इति वचनं दत्तवती इति तु सत्यम्। किन्तु चोरनायकं परिणेष्यामि इति न।

शेखरस्य दृष्ट्या परस्परमेलनम् एव विधि-विलासः। किन्तु सुवर्णदेव्या चिन्तनम् एतस्मात् भिन्नम् एव। यदि सा 'शेखरः चोरनायकः' इति ज्ञातवती न स्यात् तर्हि तं परिणयेत् अपि। तदानीं तया आजीवनं कष्टम् अनुभोक्तव्यम् अभविष्यत्। तथा न जातम् इति विचिन्त्य सा 'आवयोः दर्शनं विधिविलासः' इति उक्तवती।

'चोराणां दण्डनं राज्ञ्याः मम कर्तव्यम्' इतिचिन्तितवती सा। अतः तया वचनभङ्गः कृतः इति न। सा कर्तव्यम् आचरितवती इत्येव वक्तव्यम्" इति।

एवं वदता त्रिविक्रमेण यदा मौनभङ्गः कृतः तदा शवान्तर्गतः वेतालः अदृश्यः भूत्वा पुनः अपि यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






अस्माकं देवालयाः

# गया, बुद्धगया च

दशसहस्रवर्षेभ्यः पूर्वं गयासुरनामकः राक्षसः विष्णुं ध्यायन् तपः कृतवान्। महतीं शक्तिं सम्पादयितुम् उद्युक्तस्य तस्य तपः निरन्तरं प्रचलत् एव आसीत्।

एतस्य राक्षसस्य उग्रं तपः दृष्ट्वा आश्चर्यचकिताः देवताः भीताः। राक्षसेन तेन तपसा यदि महती शक्तिः सम्पाद्येत तर्हि निश्चयेन सः सज्जनान् पीडयति इति विचिन्त्य देवताः तस्य तपोभङ्गं कर्तुम् उद्युक्ताः।





देवतासु कश्चित् गयासुरसमीपम् आगत्य उक्तवान्– "अहम् अतीव श्रान्तः अस्मि। भवतः स्कन्धे विश्रान्तिं स्वीकरोमि" इति। एतत् सन्तोषेण अङ्गीकृतवान् गयासुरः। सः देवः तस्य स्कन्धम् आरुह्य उपविष्टवान्।



अनन्तरम् अन्ये देवाः अपि प्रथमः यथा कृतवान् तथैव गयासुरसमीपम् आगत्य स्वकीयाम् इच्छां प्रकटितवन्तः। गयासुरः सन्तोषेण स्व-शरीरं दीर्घीकृत्य सर्वेभ्यः एकैकत्र अवकाशं कल्पितवान्। किञ्चित्कालानन्तरं देवाः क्रमशः तं राक्षसं भूमौ नोदयितुम् आरब्धवन्तः।

देवानाम् उद्देशं ज्ञातवान् गयासुरः। विष्णोः भक्तिकारणतः सः सर्वान् अपि प्रीत्या पश्यन् उक्तवान्– "देवाः, भवताम् इच्छानुसारम् अहं भूमिं प्रविशामि। किन्तु भवद्भिः वचनं दातव्यं यत् 'कदापि भवन्तं न त्यजामः वयम्' इति। देवाः एतत् अङ्गीकृतवन्तः। गयासुरः भूमिं प्रविष्टवान्।





तस्मिन् स्थले एव ब्रह्मदेवः यज्ञं कृतवान्। देवताभिः सह गयासुरः तत्र भूगतः इति कारणतः तस्य भक्त्या विनयेन च सन्तुष्टः विष्णुः प्रत्यक्षीभूय गयासुरस्य आत्मानं तत् स्थलं च आशिषा अनुगृहीतवान्।

तस्मिन् स्थले विष्णोः पादचिह्नानि उद्भूतानि। इदानीम् अत्र विराजमानं विष्णुपादमन्दिरं इन्दोरस्य राज्ञी अहल्याबाई निर्मितवती।






गयाक्षेत्रम् इति प्रसिद्धे अस्मिन् क्षेत्रे जनाः पितृकार्याणि आचरन्ति। परितः विद्यमानाः असङ्ख्याकाः जनाः आगत्य पितृदेवताप्रीत्यर्थं तर्पणादिकं कुर्वन्ति।

अस्मिन् प्रदेशे फल्गुनदी अदृश्यतया अन्तर्वाहिनीरूपेण प्रवहति। भक्ताः भूमिं खनन्ति चेत् तत्क्षणे एव ततः जलं स्रवति। एतत् जलं महिमान्वितम् इति भक्तानां विश्वासः।





यस्मिन् क्षेत्रे वटवृक्षस्य अधः गौतमबुद्धस्य ज्ञानोदयः जातः तत् बुद्धगयाक्षेत्रं गयातः चतुर्दशकिलोमीटर् दूरे अस्ति। बुद्धाय आश्रयं दत्तवतः एतत वटवृक्षतः उत्पन्नः अन्यः वटवृक्षः इदानीम् अपि अस्ति।

अत्रत्यः महादेव्याः आलयः अपूर्वैः बौद्धशिल्पैः अलङ्कृतः अस्ति। अस्य आलयस्य मुखद्वारस्य शिल्पं तु असदृशम्। अस्मिन् आलये सुवर्ण-तन्तुभिः आच्छादितः बुद्धविग्रहः अस्ति। एषः देवालयः अनेकशतकतः देश-विदेशीयान् भक्तजनान् आकर्षन् अस्ति।






ज्ञानसिद्धेः अनन्तरं बुद्धः उत्थाय कृतज्ञतापूर्णदृष्ट्या दिगन्तं पश्यन् यत्र निर्निमेषं स्थितवान् तत् चैत्यमहाबोधिनामकं पवित्रं स्थलम् एतस्य आलयस्य समीपे एव अस्ति।



# वास्तविकः चोरः

शिवपुरनामके ग्रामे प्रयाणिकानां वसत्यर्थम् उत्तमसौलभ्ययुता एका धर्मशाला आसीत्।

कस्मिंश्चित् दिने प्रातःकाले द्वौ प्रयाणिकौ तत्र आगत्य एकस्य धनस्यूतस्य विषये विवादम् आरब्धवन्तौ। धनस्यूतः मम एव इति द्वौ अपि वदतः। धनस्यूते दशाधिकशतं रूप्यकाणि आसन्। सः एव कलहस्य विषयः। धर्मशालायां विद्यमानाः सर्वेऽपि तत्र सम्मिलिताः। न्यायनिर्णयं कर्तुं कोऽपि न शक्तः।

एतत् दृष्ट्वा ग्रामरक्षकाः "विवादस्य निर्णयः अत्र न भवति। गच्छाम ग्रामाधिकारिणः समीपम्" इति वदन्तः तौ नीतवन्तः।

ग्रामाधिकारी विनयेन बहुवारम् उक्तवान्- 'सत्यं वदतु' इति। किन्तु तौ द्वौ अपि 'धनस्यूतः मम' इत्येव वदतः। अन्यत् किमपि वक्तुं न सिद्धौ।

एतेन श्रान्तः ग्रामाधिकारी "कारागृहम् एव सत्यं वाचयति" इति उक्त्वा तौ द्वौ अपि कारागृहे स्थापयितुं रक्षकान् आज्ञापितवान्।

"तयोः मध्ये एकः एव चोरः इति तु सत्यम्। किन्तु साक्षिणं विना कः चोरः इति कथं ज्ञायते?" इति ग्रामाधिकारी चिन्तामग्नः।

पूर्वं राजा मन्त्रिणः साहाय्येन एतादृशसमस्यायाः परिहारं करोति स्म इति एषः ज्ञातवान् आसीत्। इदानीम् अहम् अपि चोरः कः? इति उपायेन जानामि इति चिन्तितवान् ग्रामाधिकारी। तया चिन्तया रात्रौ निद्रा अपि न आगच्छति स्म तस्य।

द्वित्राणि दिनानि अतीतानि। ग्रामाधिकारी सूक्ष्मतया परिशीलयति स्म। "यद्यपि द्वयोर्मध्ये एकः एव अपराधी, तथापि तेन सह



अहं निरपराधिनम् अपि कारागृहे स्थापितवान् अस्मि। एषा एका महती समस्या जाता'' इत्यपि चिन्तया उक्तवान्।

तत् श्रुत्वा उन्नताधिकारी किञ्चित्कालं विचिन्त्य उक्तवान्- ''भवतः उद्योगे एतादृशः सङ्कटः सहजः एव। अपराधिनं ज्ञातुं निरपराधिने अपि कष्टं दातव्यं भवति। तत् तेषां गतजन्मनः पापं ग्रहचारः वा। तदर्थं भवतः मनसः दृढता अपेक्षिता'' इति।

स्थितः अन्यः निरपराधी अपि वृथा कष्टम् अनुभवति। अतः न्यायदेवतायाः पुरतः अहम् अपि अपराधी भविष्यामि'' इति सः व्यथितः।

तस्मिन् समये एव सः एकां वार्तां ज्ञातवान् यत् राजधानीतः कश्चित् उन्नताधिकारी ग्रामाणां परिस्थितिं विचारयन् शिवपुरं प्रति आगच्छन् अस्ति इति।

ग्रामाधिकारी तम् उन्नताधिकारिणं ग्रामस्य सीमायाम् एव स्वागतीकृत्य ग्रामविवरणं निवेदितवान्। आगतां समस्याम् उक्त्वा ''तयोर्मध्ये एकः चोरः। द्वितीयः तस्य धनस्य यजमानः। कः चोरः? इति ज्ञातुम् अशक्तः

अनन्तरम् उन्नताधिकारी धनस्यूतं दृष्ट्वा आश्चर्येण उक्तवान्- ''भवतः समस्यायाः परिहारः ज्ञातः। तौ द्वौ अपि चोरौ एव। एषः धनस्यूतः मम एव। दिनद्वयात् पूर्वम् उपायेन कश्चित् मम सकाशात् एतं स्यूतम् अपहृतवान् आसीत्। प्रायशः कारागृहे स्थितौ एव तौ चोरौ। अतः एव तयोः कलहः आरब्धः'' इति।

उन्नताधिकारिणः वचनं श्रुत्वा आश्चर्यचकितः ग्रामाधिकारी उक्तवान्- ''भोः, अत्र एकः विषयः ज्ञातव्यः। धनस्यूतं दृष्ट्वा तत्क्षणे एव उक्तवान् भवान् 'मम एव' इति। समीचीनम्। तदर्थं साक्ष्याधारः आवश्यकः किल? तादृशं विना अहं भवते धनस्यूतं दास्यामि चेत् मूर्खता आचरिता भवेत्। यतः इतःपूर्वं आवयोः परस्परपरिचयः अपि न आसीत्'' इति।

''भवता उक्तं सत्यम् एव। तौ द्वौ अपि

आनाय्य मम पुरतः पृच्छतु। तदा सत्यसङ्गतिः निश्चयेन ज्ञायते" इति उक्तवान् उन्नताधिकारी।

ग्रामाधिकारी कारागृहे स्थापितवन्तौ तौ द्वौ अपि आनाय्य पृष्टवान्- "इदानीं वा सत्यं वदताम्। नो चेत् इतःपरम् अपि कारागृहे स्थातव्यं भवेत्। एषः धनस्यूतः कस्य?" इति।

द्वौ अपि यथापूर्वं 'मम एव' इति उक्तवन्तौ।

कुपितः ग्रामाधिकारी उक्तवान्- "एषः स्यूतः भवतोः द्वयोः अपि न। राजधानीतः आगतस्य उन्नताधिकारिणः स्यूतः एषः। चोरत्वं यदि अङ्गीक्रियते तर्हि लघुदण्डनेन एव भवन्तौ त्यजामि" इति।

तदा तयोः मध्ये अन्यतरः सङ्कटेन उक्तवान्- "भोः, अस्मिन् राज्ये केनचित् पीडाकीटेन धर्मः बद्धः अस्ति। एतावत्पर्यन्तं मया कष्टेन आर्जितं कश्चित् अपहर्तुं प्रयत्नं करोति स्म। इदानीम् उन्नताधिकारी इति वदन् पुनः कश्चित् अपहर्तुं प्रयतमानः अस्ति। न्यायनिर्णयं कर्तुं योग्यानां प्रामाणिक-बुद्धिमताम् एव अभावः" इति।

तदा द्वितीयः ग्रामाधिकारिणं दृष्ट्वा कोपेन उक्तवान्- "न्यायनिर्णयं कर्तुं भवान् न समर्थः इति तु सिद्धम्। एतदर्थं महती बुद्धिमत्ता सूक्ष्मता च अपेक्षिता। तत् द्वयमपि भवतः नास्ति। यः कोऽपि उन्नताधिकारी




आगतवान् इति चेत् धनस्यूतः तस्य इति कथं वदति?" इति।

ग्रामाधिकारी कोपं निगृह्णन् पृष्टवान्- "धनस्यूतः तस्य न इति कथं सधैर्यं वदति भवान्?" इति।

"कथम् इति चेत्! मया सह यः कारागृहे स्थितवान् अस्ति सः धर्मशालां प्रति आगमनात् पूर्वम् एकस्मिन् ग्रामे कस्यचित् वणिजः सकाशात् धनं स्वीकृत्य गणयन् आसीत्। एतत् स्वतः दृष्टवान् अहम्। स्वार्थकारणेन वा असामर्थ्य–कारणेन वा भवान् न्यायनिर्णये अन्याय्यम् आचरति। राजधानीं गत्वा एतं विषयं महाराजाय निवेदयामि" इति उक्तवान् चोरः।

एतत् श्रुत्वा कुपितः ग्रामाधिकारी उन्नताधिकारिणं दृष्ट्वा किमपि वक्तुम् उद्युक्तः।

तावति काले एव उन्नताधिकारी मन्दं हसन् उक्तवान्- "यथा कथम् अपि भवतु। चोरः कः इति ज्ञातः। परिस्थितेः कारणात् एव ज्ञायते-मानवाः सज्जनाः उत दुर्जनाः इति?" इति।

अस्य वचनं श्रुत्वा ग्रामाधिकारी उक्तवान्- "उन्नताधिकारिवेषेण वञ्चयन् महाराजस्य अपकीर्तिम् आनीतवान् भवान्। अक्षम्यः अपराधः एषः। इदानीम् एव भवन्तं महाराजसमीपं नयामि" इति।

"साक्षिरूपेण अहम् अपि भवन्तम् अनुसरामि" इति उक्तवान् चोरः।

सन्तुष्टः उन्नताधिकारी "कारणं यत्किमपि भवतु। न्यायनिर्णये भवतोः श्रध्दां दृष्ट्वा अहं सन्तुष्टः। यदा स्वस्मै धनं न लब्धं तदा तत् धनं तस्य यजमानस्य वा भवेत् एव इति चोरस्य इच्छा जाता। तस्य वचनानुसारम् अहम् अपि एकः वञ्चकः एव" इति वदन् वेषपरिवर्तनं कृतवान्। सः स्वयं महाराजः एव आसीत्।

एतत् दृष्ट्वा ग्रामाधिकारी, धनस्यूतस्य यजमानः, चोरः, सर्वेऽपि आश्चर्यचकिताः। ग्रामाधिकारी तं ज्ञात्वा नमस्कृतवान्।

राजा धनस्यूतं यजमानाय एव दत्त्वा ग्रामाधिकारिणम् उक्तवान्- "भवादृशः कश्चित् मम साहाय्यकः अस्ति चेत् समीचीनम्। मम साहाय्यकत्वेन भवन्तं नियोजयामि। भवतः कश्चित् अङ्गरक्षकः अपि आवश्यकः भवति। अतः प्रामाणिकः एषः चोरः एव भवतः अङ्गरक्षकः भवतु" इति।

"यथाज्ञापयति महाराजः" इति उक्तवान् ग्रामाधिकारी।

एतेन अतीव सन्तुष्टः चोरः आनन्दातिरेकेण राजानं ग्रामाधिकारिणं च नमस्कृतवान्।

एतया घटनया सर्वे अपि सन्तुष्टाः अभवन्।






पाताललोके स्थितः सुमाली एतद्वृत्तान्त ज्ञातवान् यत् स्वीयपौत्राः त्रयः अपि ब्रह्माणं तोषयित्वा अमोघान् वरान् सम्पादितवन्तः इति। तदा सः महान्तं सन्तोषं प्राप्तवान्। हर्षोन्मत्तः सः पाताले एव तूष्णीं स्थातुम् असमर्थः भूत्वा, पातालतः उपरि गन्तुं निश्चितवान्।

सः मारीच - प्रहस्त - विरूपाक्ष - महोदरादिभिः स्वीयसचिवमुख्यैः सह अट्टहासं कुर्वन् पातालतः प्रस्थाय भूमिं समागत्य महता उत्साहेन रावणस्य समीपं गतवान्।

सुमालिः रावणम् आलिङ्ग्य "वत्स! बहुकालानन्तरम् इदानीं मम इष्टार्थः फलितः। यस्य विष्णोः भयात् वयं सर्वे लङ्कां परित्यज्य पातालं गतवन्तः तस्मात् इदानीं भयं नास्ति। भवान् ब्रह्मदेवं तोषयित्वा उत्तमवरान् प्राप्तवान् किल, तैः अस्माकं महती अभिवृद्धिः भविष्यति। वस्तुतः लङ्कानगरं राक्षसानां कृते एव निर्मितम्। किन्तु भवतः विमातुः पुत्रः महाबुद्धिमान् कुबेरः तत् नगरम् आक्रम्य तत्र वसति। भवान् इदानीं येन केनापि प्रकारेण भवतः अग्रजस्य हस्तात् लङ्कानगरं पुनः प्राप्नोतु।

सर्वप्रकारैः अपि सर्वेभ्यः अर्हतमः भवान् एव राजा भूत्वा लङ्कानगरं पालयति चेत् विनाशोन्मुखः राक्षसवंशः रक्षितः भविष्यति। राक्षसाः सर्वे भवन्तं प्रति कृतज्ञाः भवन्ति। एतेन भवतः कीर्तिः अपि वर्धिष्यते" इति उक्तवान्।

तत् सर्वं श्रुत्वा रावणः " भोः पितामह, किम् एतत् उच्यते भवता? अस्माकं कृते



कुबेरः पितृसदृशः। एतादृशस्य विषये भवान् एवंरीत्या वदति किल? एतत् उचितं वा? धर्मबहिर्भूतानाम् एतादृशवचनानां श्रवणम् अपि पापकरं भवेत्" इति उक्तवान् रावणः।

सुमालिः अन्यत् किमपि वक्तुं न शक्तवान्। तदा सुमालेः सचिवेषु अन्यतमः प्रहस्तः रहस्यस्थाने रावणं दृष्ट्वा चातुर्यपूर्णवचनैः एवंरीत्या तं बोधयितुम् आरब्धवान् –

"वत्स, रावण, भवान् स्वपितामहं यत् उक्तवान् तत् न उचितम्। शूराः ये सन्ति, तेषां व्यवहारेषु अनुजः अग्रजः इति भेदः अनुचितः। आदिकालतः भ्रातॄणां मध्ये वैरः सर्वदा स्वतस्सिद्धः प्रसिद्धः च अस्ति। एवं खलु? कुबेरः तु भवतः वैमात्रेयः, न तु साक्षात् भ्राता। अदितिः दितिः च भगिन्यौ। ते द्वे अपि कश्यपब्रह्मणः पत्न्यौ भूत्वा देवताः राक्षसान् च प्रसूतवत्यौ। किन्तु विष्णुः केवलं राक्षसान् एव मारयित्वा लोकत्रयम् अपि देवताभ्यः दत्तवान्। न केवलम् एतां लङ्काम्, अपि तु समस्तभूमण्डलम् अपि राक्षसाः एव कदाचित् पालयन्तः आसन्। इदम्प्रथमतया नूतनदोषम् आचरितुं न अहं भवन्तं प्रेरयन् अस्मि। चिरकालतः एषः अधर्मः प्रवर्तमानः अस्ति। तं दोषं निवारयितुं समर्थः कोऽपि अद्यावधि अस्मासु न जातः। इदानीं भवान् तादृशः समर्थः अस्ति। अतः अस्माकं वचनानुसारेण कार्यं करोति चेत् न कोऽपि दोषः भवति। भवतः प्रयत्नेन वयं सर्वे ससुखं जीवितुं शक्नुमः? भवान् प्राप्तवरः अस्ति। अतः विष्णोः भयं नास्ति" इति।

तस्य वचनानि श्रुत्वा रावणः किञ्चित् आलोच्य अन्ते 'अस्तु' इति अङ्गीकृतवान्।

अनन्तरं वाचोयुक्तिपटुं प्रहस्तम् एव स्वीयदूतं कृत्वा कुबेरस्य समीपं प्रेषितवान्। प्रहस्तद्वारा कुबेरं प्रापयितुम् एतं सन्देशं रावणः प्रेषितवान्

"अग्रज, इदानीं भवतः अधीने या लङ्का अस्ति तस्याः उपरि मूलतः राक्षसानाम् अधिकारः अस्ति। अतः यदि भवान् लङ्कां राक्षसेभ्यः निर्विवादम् अर्पयति तर्हि धर्माचारनिरतः इति कीर्तिं भवान् प्राप्स्यति। अनुजस्य अपेक्षां पूरयित्वा प्रियः अग्रजः अपि भविष्यति। सर्वे राक्षसाः भवन्तं श्लाघन्ते" इति।



रावणस्य दूतरूपःप्रहस्तः कुबेरस्य समीपम् आगत्य सन्देशवचनानि यदा निवेदितवान्, तदा कुबेरः रावणं प्रापयितुम् एतत् उत्तरं प्रहस्तं कथितवान्-"अनुज, रावण, यदा मम पिता एतां लङ्कां मह्यं दत्तवान् तदा अत्र एकोऽपि राक्षसः न आसीत्। अतः अहम् अत्र मदीयैः यक्षैः सह वसन् अस्मि। मम राज्यं,मम ऐश्वर्यादिकम्, एतत् नगरं, सर्वम् अनुभोक्तुं भवान् अपि अर्हति एव। लङ्कानगरं भवते दातुं मम सन्तोषः एव भवति। अत्र आगत्य निश्चिन्तभावेन लङ्कानगरं पालयतु। समानपितृकौ आवाम्।आवयोः मध्ये भेदं किमर्थं पश्यति भवान्?" इति।

प्रहस्तद्वारा एतं सन्देशं प्रेषयित्वा, कुबेरः 'पितृसमीपं गत्वा एषा वार्ता निवेदनीया' इति चिन्तयित्वा तत्क्षणे एव पुष्पकविमानम् आरुह्य जनकस्य समीपं गत्वा, तं सर्वं वृत्तान्तं कथितवान्।

विश्रवाः कुबेरस्य कथनं श्रुत्वा "वत्स, मम वचनं सावधानं शृणोतु। इतः पूर्वं रावणः माम् अपि एतं विचारम् उक्तवान्। तदा अहं क्रुद्धः अभवम्। किन्तु वराणां प्राप्त्याइदानीं सः गर्वोन्मत्तः अस्ति। अतः भवान् इदानीं लङ्कां परित्यज्य, कैलासपर्वतं गत्वा, तत्रैव भवतः निवासस्थानं प्रकल्पयतु। तत्र मन्दाकिनी नदी प्रवहति। तस्यां सुवर्णकमलानि सन्ति। तस्य पर्वतस्य उपरि देवताः, अप्सरसः, किन्नराः च सर्वदा विहरन्ति। इदानीं रावणेन सह वैरं मास्तु। इदानीं भवान् यत् उत्तरं प्रेषितवान्, तत् उचितम् एव अस्ति" इति उपदिष्टवान्।

कुबेरः निर्मलचित्तेन जनस्य वचनम् अक्षरशः अनुसरन् स्वपत्नीं, पुत्रान् सचिवान् अनुचरान् धनकनक-वाहनादिकं च गृहीत्वा लङ्कातः निर्गत्य कैलासपर्वतं गतवान्। जनकेन उक्ताः विचाराः यथार्थम् आसन्। सर्वप्रकारैः सः प्रदेशः मनोहरः आह्लादकरः च आसीत्।

अत्यानन्दम् अनुभवन् प्रहस्तः रावणस्य समीपं गत्वा-"रावण, लङ्कानगरं सलीलम् एव रिक्तीकृतम्। कुबेरः भवद्भयात् किमपि वादविवादम् अपि अनिच्छन् स्वीयैः समस्तबन्धुबान्धवैः सह लङ्कां परित्यज्य निर्गतवान्। इदानीं भवान् अस्मदीयैः सर्वैः सह तत्र गत्वा निरातङ्कं राज्यपालनं



करोतु" इति उक्तवान्।

रावणः अनुजाभ्यां, अन्यबन्धुजनैः च सह लङ्कां गतवान्। तत्र महता वैभवेन तस्य राज्याभिषेकमहोत्सवः सम्पन्नः। सर्वत्र राक्षसैः व्याप्तं लङ्कानगरं नूतनशोभां प्राप्य विराजते स्म।

एवंरीत्या अत्र रावणः लङ्कानगरं पालयन् आसीत्। तत्र कैलासपर्वते अग्रजः कुबेरः अलकानगरं निर्माय वैभवेन तत् नगरं पालयितुम् आरब्धवान्।

लङ्काधिपत्य - प्राप्त्यनन्तरं रावणः स्वीयभगिनीं शूर्पणखां, कालकेयवंशे जाताय विद्युद्जिह्वाय दत्त्वा विवाहं कारितवान्। तत् कार्यम् एव रावणेन प्रप्रथमतया कृतं महोत्सवरूपं कल्याणकार्यम् आसीत्।

एवंरीत्या काले गच्छति सति, एकदा रावणः मृगयार्थम् अरण्यं गतवान्। तत्र सः एकं साधुपुरुषं, तेन स्थितां काञ्चन सुन्दरकन्यां च दृष्टवान्।

"भवान् कः? एतस्मिन् अरण्ये एतया बालया सह किमर्थम् अटन् अस्ति?" इति रावणः तं साधुपुरुषं पृष्टवान्।

तदा सः साधुपुरुषः एवम् उक्तवान्-"वत्स, अहं दितेः पुत्रः अस्मि। मयः इति मम नामधेयम्। भवान् हेमानामिकां देवनारीं श्रुतवान् स्यात्। देवताः तां हेमां मह्यं दत्त्वा विवाहं कारितवन्तः। एषा कन्या आवयोः पुत्री। एतस्याः नामधेयं मण्डोदरी इति। चतुर्दशवर्षेभ्यः पूर्वं मम पत्नी हेमा मां परित्यज्य स्वर्गं गतवती। इदानीम् एतस्याः बालायाः कृते अनुरूपस्य वरस्य अन्वेषणार्थम् एवंरीत्या अटन् अस्मि। इदानीं भवतः परिचयं प्राप्तुं मम कुतूहलम् अस्ति। वदति चेत् श्रुत्वा सन्तोषं प्राप्नोमि" इति।

"अहं पुलस्त्यब्रह्मणः पौत्रः अस्मि। मम नामधेयं दशग्रीवः। रावणः इत्यपि नामान्तरम् अस्ति। कुम्भकर्णः, विभीषणः च इति द्वौ अनुजौः, एकः अनुजा च सन्ति" इति उक्तवान् रावणः।

रावणः महर्षिवंशीयः इति श्रवण–समनन्तरम् एव मयः स्वीयकुमारीं तस्मै दत्त्वा विवाहं कर्तुं सिद्धः अभवत्। रावणः



अपि तस्य वचनम् अङ्गीकृतवान्। तदानीम् एव तत्रैव अग्निं प्रज्वाल्य, मयः स्वीयकुमार्याः हस्तं रावणस्य हस्ते विन्यस्य विवाहं कृतवान्। तदा मयः जामात्रे एकं महत् शक्त्यायुधं यौतकरूपेण दत्तवान्। मयः पूर्वं महत् तपः तप्त्वा तत् आयुधं सम्पादितवान् आसीत्। तेन आयुधेन एव रावणः रामायणमहायुद्धे लक्ष्मणं ताडयित्वा तं मूर्च्छितं कृतवान्।

रावणः स्वीयपत्न्या सह लङ्कां गत्वा अनुजयोः विवाहार्थं प्रयत्नं कृतवान्। वैरोचनस्य पौत्रीं वज्रज्वालां कुम्भकर्णस्य कृते, शैलूषनामकस्य गन्धर्वराजस्य पुत्रीं सरमां विभीषणस्य कृते च निश्चित्य, युगपत् एव तयोः द्वयोः अपि विवाहं वैभवेन कारितवान्। एवंक्रमेण लङ्कानगरं पूर्वापेक्षया प्रसिद्धतरं जातम्।

त्रयः अपि भ्रातरः स्वीयपत्नीभिः सह ससुखं वैवाहिकजीवनं यापयन्तः आसन्। किञ्चित्कालानन्तरं रावणस्य पत्नी मण्डोदरी मेघनादं प्रसूतवती। जननसमनन्तरम् एव श्रुतं शिशोः रोदनं मेघगर्जनसदृशम् आसीत्। अतः एव तस्य शिशोः नाम मेघनादः इति निश्चितम्। तस्य बालस्य उपरि जननीजनकयोः अपरिमितं वात्सल्यम्। तस्य विषये रावणस्य महान् विश्वासः अभिमानः च। सः बालः रावणापेक्षया अपि शूरतरः इति प्रसिद्धः अभवत्। एतस्य मेघनादस्य एव इन्द्रजित् इति नामान्तरम्।

कदाचित् रावणः सिंहासने उपविश्य राजकार्यमग्नः आसीत्। तदा ब्रह्माण्डम् भग्नं वा इति आयासम् उत्पादयन् कुम्भकर्णः महाजृम्भणं कुर्वन्, तन्द्रां सोढुम् असमर्थः भूत्वा पुनः पुनः अङ्गभङ्गं कुर्वन् " अग्रज, एषा निद्रा मां भृशं बाधते। मम सुखनिद्रार्थं कामपि व्यवस्थां कल्पयतु" इति प्रार्थितवान्।

रावणः प्रियानुजस्य कुम्भकर्णस्य कृते एकम् अद्भुतं निद्रामन्दिरं निर्मापितवान्।

कुम्भकर्णः तस्मिन् मन्दिरे शयित्वा वर्षवर्षपर्यन्तं निद्रां कर्तुम् आरब्धवान्।

यदा कुम्भकर्णः एकत्र गाढनिद्रामग्नः आसीत् तदा अन्यत्र रावणः स्वीयम्



असाधारणबलं प्रतिदिनं वर्धयन्, दिग्विजययात्रां कुर्वन् देवताः, मुनिजनान् यक्षान्, गन्धर्वान् च यथेच्छं पीडयितुम् आरब्धवान्। यथा मदोन्मत्तः गजः तडागं प्रविश्य, तं पङ्कावृतं करोति, तथा रावणः देवतानां नन्दनोद्यानादिकं सर्वं नष्टं भ्रष्टं कृतवान्।

अनुजस्य एतादृशदुष्टकार्याणि दृष्ट्वा कुबेरः अतीव खिन्नः अभवत्। स्वीयवंशगौरवस्य अननुगुणम् एतद्दौष्ट्यं त्यजतु इति तं बोधयितुम् इच्छन्, एकं दूतं रावणस्य समीपं प्रेषितवान्। सः दूतः लङ्काम् आगत्य प्रथमं विभीषणं दृष्टवान्। विभीषणः तं दूतं सादरं सत्कृत्य, कुबेरस्य योगक्षेमादिकं विचार्य ज्ञात्वा, तस्य आगमनकारणं पृष्टवान्।

दूतस्य वचनानि श्रुत्वा, विभीषणः तं रावणस्य समीपं नीतवान्।

रावणं प्रति कुबेरेण दूतद्वारा प्रेषितानि सन्देशवचनानि एतानि आसन् – "अनुज, रावण, इदानीं भवान् महतीं कीर्तिं प्राप्तवान् अस्ति। एतावता तृप्तः भूत्वा, इतः परं यथाशक्ति साधुमार्गस्य अवलम्बनम् उचितं भवति। भवता ध्वंसीकृतं नन्दनवनं अहं साक्षात् दृष्टवान्। भवता पीडिताः देवाः भवतः उपरि प्रतीकारं साधयितुं प्रयत्नपराः सन्ति इति ज्ञातम् अस्ति। एतेषु दिनेषु अहं नियमितरूपेण रौद्रव्रतम् आचरितुम् इच्छन्, हिमालयं गत्वा, तत्र शिवेन सह उपविष्टां पार्वतीदेवीं दृष्टवान्। तस्याः देव्याः सौन्दर्येण बद्धं मम वामनेत्रं यद्यपि विशेषोद्देशं विना तस्याः उपरि कीलितम्, तथापि तत् नेत्रं सपदि एव दग्धं सत् पिङ्गलवर्णीयम् अभवत्। अनन्तरम् अहं बहुविशालस्य तस्य पर्वतस्य अन्यस्मिन् पार्श्वे स्थित्वा पुनः रौद्रव्रतम् अवलम्बितवान्। नियमानुसारेण यदा तत् व्रतं समाप्तं, तदा सन्तुष्टः ईश्वरः आगत्य मां "पूर्वम् अहम् अपि एतं व्रतं कृतवान्। अनन्तरं द्वितीयः एतद्व्रतकर्ता भवान् एव अस्ति। भवान् मम स्नेहितः भवतु। इतः परं भवतः एकाक्षिपिङ्गलः इति अपि एकम् अधिकं नामधेयम् अस्तु" इति उक्तवान्। अनन्तरं शिवस्य अनुज्ञां प्राप्य यदा अहं गृहं प्रत्यागतवान्, तदा भवतः

दुष्कृत्यानां वार्ता मम कर्णपथं प्रविष्टा। अस्माकं वंशस्य कीर्तेः नाशस्य कारणीभूतानि एतादृशहीनकार्याणि त्यजतु। वत्स, रावण, मुनयः देवताः च सम्भूय भवतः मारणार्थम् उपायान् अन्विष्यन्तः सन्ति इति श्रुतम्। अतः एव अहं भवन्तं जागरयन् अस्मि" इति।

एवं रीत्या कुबेरस्य वचनानि रावणस्य पुरतः यदा दूतः उक्तवान्, तदा क्रोधाविष्टः रावणः "रे दूत, मम पुरतः एतादृशवचनानि भवान् उक्तवान् खलु। अतः भवन्तं, एतादृशसन्देशप्रेषकं तं मम अग्रजं च इदानीं किं करोमि इति पश्यतु। कुबेरः मादृशं बोधयितुं समर्थः जातः वा? शिवस्य स्नेहः लब्धः इति मम पुरतः स्वीयगर्वं प्रकटयति वा? ज्येष्ठः, पितृसमानः च इति चिन्तयन् एतावत्पर्यन्तं तस्य प्राणरक्षणं कृतवान्। तस्य वचनानि श्रुत्वा इदानीं लोकत्रयम् अपि जेतव्यम् इति चिन्तयन् अस्मि। मम अग्रजस्य कारणात् अवशिष्टान् दिक्पालकान् अपि इदानीं नाशयिष्यामि" इति वदन् कुबेरस्य दूतं खड्गेन हत्वा" एतं भक्षयन्तु" इति राक्षसेभ्यः दत्त्वा तदानीम् एव प्रयाणार्थं सिद्धः अभवत्। अनन्तरं रावणः रथम् आरुह्य लोकत्रयम् अपि जेतुं प्रस्थितवान्।

सः प्रप्रथमतया कुबेरस्य उपरि एव आक्रमणं कर्तुं निश्चित्य महोदरः,प्रहस्तः, मारीचः, शुकः, सारणः, धूम्राक्षः च इति नामकैः महाशूरैः षट्सचिवैः सह प्रस्थाय



शीघ्रं शीघ्रं नदीः, पर्वतान् वनानि च लङ्घयन् कैलासपर्वतं प्राप्तवान्। तत्र स्थिताः यक्षाः रावणं तस्य समीपे उपविष्टान् तस्य अनुचरान् च दृष्ट्वा कुबेरस्य अनुजः आगतः इति ज्ञात्वा, भीताः सन्तः धावन्तः गत्वा तां वार्तां कुबेरं निवेदितवन्तः।

सद्यः एव कुबेरः स्वीयान् यक्षान् प्रेषयित्वा रावणं सम्मुखीकर्तुम् आज्ञापितवान्। असङ्ख्याकाः यक्षाः आगत्य रावणं तस्य सचिवान् च आक्रम्य युद्धं कर्तुम् आरब्धवन्तः। रावणस्य एकैकः अपि सचिवः सहस्रसङ्ख्याकैः यक्षैः सह युद्धं कृतवान्। यथा अग्निः शुष्कतृणं नाशयति, तथा रावणः सर्वान् यक्षान् निर्मूलं मारितवान्। तत्र ये द्वित्राः यक्षाः अवशिष्टाः ते युद्धभूमितः

निर्गत्य धावितवन्तः।

एतं वृत्तान्तं श्रुत्वा कुबेरः पुनः कतिपय–सहस्रसङ्ख्याकान् यक्षान् रावणं सम्मुखीकर्तुं प्रेषितवान्। तेषु संयोधकण्टकनामकः कश्चित् यक्षः मारीचस्य उपरि चक्रायुधं प्रयुज्य, तं पर्वततः अधः पातितवान्। किन्तु मारीचः पुनः उत्थाय युद्धक्षेत्रं यावत् आगतवान् तावत् सः यक्षः ततः धावितवान्।

अनन्तरं रावणः तोरणम् आकृष्य तेन ताडयन् एकं यक्षं मारितवान्। सः अलकानगरं त्यक्त्वा अन्यत्र धावन् आसीत्। अनन्तरं भीताः सर्वे यक्षाः रणाङ्गणतः धावित्वा नदीः गुहाः च प्रविश्य तत्र तत्र अन्तर्हिताः स्थितवन्तः।

द्वितीयवारं प्रेषिताः यक्षाः अपि यदा पराजिताः तदा कुबेरः मणिभद्रनामकं महायक्षं राक्षसान् सम्मुखीकर्तुं प्रेषितवान्।

मणिभद्रः चतुस्सहस्रसङ्ख्याकैः यक्षैः सह गत्वा युद्धं कृतवान्। ते सर्वे यक्षाः यदा विविधानाम् आयुधानां सततप्रयोगं कृतवान्तः, तदा तेषां प्रहारान् सोढुम् असमर्थाः राक्षसाः धावितुम् आरब्धवन्तः। किञ्चित्कालं यावत् द्वयोः पक्षयोः मध्ये घोरं युद्धं प्रवृत्तम्। तस्मिन् घोरयुद्धे प्रहस्तः सहस्रयक्षान्, महोदरः द्वितीयसहस्रयक्षान्, तथा मारीचः द्विसहस्रयक्षान् च नाशितवन्तः। राक्षसाः मायाविनः। तेषां पुरतः मुग्धाः यक्षाः कथं वा स्थातुं शक्नुयुः?

तथापि मणिभद्रः घनघोरं युद्धम् एव कृतवान्। धूम्राक्षः मुसलायुधेन तस्य वक्षः ताडितवान्। तथापि अचलः एव स्थित्वा मणिभद्रः स्वीयां गदां चक्राकारेण चालयित्वा यदा ताडितवान् तदा धूम्राक्षः भूमौ पतितवान्। तत् दृष्ट्वा स्वयं रावणः एव मणिभद्रस्य समीपं योद्धुम् आगतवान्। मणिभद्रः रावणस्य उपरि पुनः पुनः त्रीणि शक्त्यायुधानि प्रयुक्तवान्। अन्ते दृढः रावणः मणिभद्रस्य शिरसि बलेन ताडितवान्। तेन ताडनेन मणिभद्रस्य किरीटस्य एकः भागः स्खलन् पार्श्वभागे पतितः। एतेन कारणेन मणिभद्रस्य पार्श्वमौलिः इत्यपि नामान्तरं जातम्।





# अन्तःकलहः

कस्मिंश्चित् ग्रामे रमापतिः नाम युवकः आसीत्। सः विद्याभ्यासं समाप्य मङ्गलपुरस्य भूस्वामिनः कार्यालये उद्योगं प्राप्तवान्। उद्योगस्य योग्यं वेतनं प्राप्नोति स्म सः। नूतनतया विवाहितः सः रमापतिः श्वशुरस्य ग्रामं गत्वा पत्नीं गिरिजाम् आनीतवान्।

गिरिजा तु ग्रामे जन्म प्राप्तवती किल? अतः सा ग्रामीणं जीवनं केवलं जानाति। अतः मङ्गलपुरनगरस्य जीवनम् कष्टम् इव भासते तस्याः। सा युक्ते समये पाककार्यं समाप्य पत्युः कृते परिवेषयितुं बहुप्रयत्नं करोति। तथापि सा निर्वोढुं न शक्नोति। तेन कारणेन रमापतिः कार्यालये द्वित्रवारं अधिकारिभ्यः तर्जनं स्वीकृतवान्।

कदाचित् सायङ्काले कार्यालयतः गृहम् आगतः रमापतिः पत्नीं तर्जयन् उक्तवान्- "पश्यतु, भवती यथाकथमपि पाककार्यं समापयतु, तत्र मम आक्षेपः नास्ति। किन्तु श्वः आरभ्य युक्ते समये मया कार्यालयः गन्तव्यः। जागरुका भवतु, मा विस्मरतु" इति।

तस्यां रात्रौ गिरिजायाः निद्रा एव न आगता। सा अर्धरात्रे एव उत्थाय पाकम् आरब्धवती। समये परिवेष्य पतिं कार्यालयं प्रेषितवती च। तस्याः एका महती चिन्ता परिहृता।

रमापतिः कार्यालयं प्रस्थितः। मार्गे गमन-समये कश्चित् अपरिचितः तं गृहीत्वा हसन् उक्तवान् -"किं भोः, वर्षद्वयानन्तरम् अकस्मात् सम्मिलितौ आवाम्। अद्य अहम् अतीव सन्तुष्टः अस्मि" इति।

क्षणकालम् आश्चर्यचकितः रमापतिः "अन्यथा न चिन्तयतु। भवान् कः इत्येव अहं न ज्ञातवान्" इति उक्तवान्। तदा सः अपरिचितः उच्चैः हसन् उक्तवान् -"अहं



भवतः विवाहार्थं न आगतवान् इति कोपः वा? सः कोपः इदानीम् अपि न शान्तः इति मन्ये। कार्यबाहुल्यकारणतः आगन्तुं न शक्तवान् इति पूर्वमेव लिखितवान् किल वीरभद्र" इति।

आश्यर्चचकितः रमापतिः –"मम नाम रमापति. अहं वीरभद्रः न। मया शीघ्रं गन्तव्यम्" इति वदन् गन्तुम् उद्युक्तः।

तदा नूतनः सः रमापतेः हस्तम् इतोऽपि भद्रं गृह्णन् हसन् उक्तवान्- "भवान् वीरभद्रः न इति वदति चेत् अपि भवतः दक्षिणहस्तस्य पृष्ठभागे विद्यमानस्य जन्मजातस्य कालकस्य साक्ष्यं जानामि किल?" इति। रमापतिः जामितां प्रदर्शयन् "भोः,मम वामहस्तस्य कनिष्ठाङ्गुलीं विना अन्यत्र कुत्रापि कालकः नास्ति। त्यजतु माम्, विलम्बः जातः" इति उक्तवान्।

एतावत् श्रुत्वा सः नूतनः रमापतेः हस्तं त्यजन् उक्तवान् -"क्षाम्यतु, मम स्नेहितः वीरभद्रः इति विचिन्त्य भवते कष्टं दत्तवान्। तस्य भवतः च मध्ये किञ्चित् अपि भेदः नास्ति" इति।

रमापतिः कार्यालयं गत्वा सायङ्काले गृहम् आगतवान्। तदा पत्नी गिरिजा पतिं उक्तवती–" अद्य मध्याह्ने भवतः बाल्यस्नेहितः वीरभद्रः आगतवान् आसीत्" इति।

तत् श्रुत्वा आश्चर्यचकितः रमापतिः- "तादृश नामकः स्नेहितः मम कोऽपि नास्ति। इदानीं सः कुत्र अस्ति?" इति पृष्टवान्।

"प्रवासकारणतः श्रान्तः इति वदन् पेटिकाम् अस्माकं प्रकोष्ठे स्थापितवान्। अनन्तरं भोजनं कृत्वा प्रकोष्ठे एव शयितः आसीत्। इदानीं किञ्चित्पूर्वं 'विपणिं गत्वा आगच्छामि' इति उक्त्वा गतवान्" इति उक्तवती गिरिजा। एतत् श्रुतवतः रमापतेः संशयः उत्पन्नः।

सः शीघ्रं प्रकोष्ठं गत्वा अपरिचितेन स्थापितां पेटिकाम् उद्घाटितवान्। तस्यां पेटिकायां पञ्चषाः इष्टिकाः आसन्।

"एषः कश्चित् वञ्चकः एव। भोः, गृहतः अन्यत् किमपि नीतवान् वा इति पश्यतु" इति पत्नीम् उक्तवान् रमापतिः।

द्वौ अपि प्रकोष्ठे विद्यमानाः सर्वाः पेटिकाः शोधितवन्तः। एकस्यां पेटिकायां चतुःशतं रूप्यकाणि, गिरिजायाः कङ्कणद्वयं च न आसीत्।

कोपाविष्टः रमापतिः पत्नीं पश्यन् उक्तवान् - "निश्चयेन भवती ग्रामीणा मुग्धा इति स्पष्टं जातम्। येन केनचित् अपरिचितेन उक्तम् इति विश्वासेन तं भोजयित्वा प्रकोष्ठे शायितवती किल। भवत्याः बुद्धिः एव एवम्" इति।

अश्रुपूर्णा सा अपि असमाधानेन उक्तवती -"सः वञ्चकः इति अहं किं जानामि? भवतः कनिष्ठाङ्गुल्यां कालकः अस्ति इति सम्भाषणसन्दर्भे उक्तवान्। भवता धृतस्य प्रवालनिर्मितस्य अङ्गुलीयकस्य वर्णनम् अपि कृतवान्। अतः एव मम विश्वासः उत्पन्नः" इति।

"एवं वा? संशयः एव नास्ति। प्रातः मां गृहीत्वा उपायेन मम विषयं ज्ञातवान् एषः चोरः। महान् वञ्चकः" इति उक्तवान् रमापतिः।

"सत्यम्। सः एव। तस्य पीडातः विमुक्तिं प्राप्तुं भवान् सर्वम् अपि उक्तवान्। अहं तु ग्रामीणा मन्दबुद्धिः स्याम्। किन्तु भवान् नागरिकः बुद्धिमान् चेत् अपि वञ्चितः जातः किल?" इति उपहासं प्रकटितवती गिरिजा।

एतत् श्रुत्वा रमापतिः कुपितः। सः कोपेन प्रतिवचनानि उक्तवान्। गिरिजा अपि तथैव कृतवती। एवं परस्परं दूषयन्तौ तौ कलहं





कृतवन्तौ। अन्ते तौ रात्रौ भोजनं विना एव सुप्तवन्तौ।

अनन्तरदिने रमापतिः पार्श्वग्रामं गत्वा नारायणनामकम् आनीतवान्। एषः गिरिजायाः दूरबन्धुः। ब्रह्मचारिणः एतस्य प्रयत्नेन एव गिरिजा-रमापत्योः विवाहः सम्पन्नः आसीत्।

रमापतिः गिरिजां प्रदर्शयन् नारायणम् उक्तवान्-"असत्यत्रयम् उक्त्वा भवान् एतां मम गले बद्धवान्" इति।

"किं तत् असत्यत्रयम्?" इति पृष्टवान् नारायणः।

"कन्या कार्ये दक्षा, बुद्धिमती, विनीता च इति भवान् उक्तवान् आसीत्। प्रातः दशवादने अतीते अपि एतस्याः पाकः समाप्तः न भवति। एषा एतस्याः कार्यदक्षता। बुद्धिमत्ता अपि असदृशी एव। कस्मैचित् वञ्चकाय गृहे अवकाशं दत्तवती, येन धनस्य आभरणानां च चौर्यम् अभवत्। पत्या मया सह कलहं कुर्वती एषा कीदृशी विनयशीला! भवतः वचनैः वञ्चितः अहम्" इति उक्तवान् रमापतिः।

गिरिजा अश्रूणि स्रावयन्ती प्रवृत्तं सर्वं नारायणाय निवेदितवती।

सर्वं शान्ततया श्रुत्वा नारायणः उक्तवान्-"अत्र भवतोः कस्यापि दोषः नास्ति। दोषः तु तस्य वञ्चकस्य एव। गृहे ज्येष्ठः कोऽपि नास्ति इति कारणतः एवं सम्पन्नम्। अत्र कश्चन ज्येष्ठः अपेक्षितः। तां न्यूनताम् अहं परिहरिष्यामि। इतः परं मम वसतिः अत्र एव। पुनः कदाचित् अपि एतादृशी वञ्चना अत्र न भविष्यति" इति।

नारायणस्य आगमनानन्तरं पञ्चदश दिनानि अतीतानि। एकदा रमापतिः पत्नीं पृष्टवान् -"इतोऽपि कियन्ति दिनानि तिष्ठति भवत्याः बन्धुः नारायणः?" इति।

"अहं किं जानामि? अहं तं न आनीतवती किल? आनीतवान् भवान् एव तं प्रेषयतु" इति उक्तवती गिरिजा।

शनिः इव गृहं प्रविष्टवतः नारायणस्य निष्कासनं कथम् इति बहुधा चिन्तितवान् रमापतिः। अन्ते तस्य मनसि एकः उपायः स्फुरितः।

रमापतेः एका पितृष्वसा आसीत्। पञ्चषेभ्यः वर्षेभ्यः पूर्वं तस्याः पतिः दिवङ्गतः आसीत्। तस्याः एका एव पुत्री। अन्यः कोऽपि नास्ति इति कारणतः तस्याः विवाहदायित्वं रमापतेः उपरि आपतितम् आसीत्। तस्याः नाम सुकुमारी इति। किन्तु वर्णः तु कृष्णः। सा वाचाला अपि। अतः कोऽपि तां परिणेतुं न सिद्धः आसीत्। इदानीं सा त्रिंशद्वर्षीया।

एतं विषयं स्मृत्वा रमापतिः एकदा नारायणम् आहूय पितृष्वसुः पुत्र्याः सुकुमार्याः विषयं तस्मै निवेद्य उक्तवान्-''तस्याः विवाहवयः अतिक्रान्तम् इव। भवान् एव कथञ्चित् एकं योग्यं वरं निश्चिनोतु। भवतः उपकारं सदा स्मरिष्यामि'' इति।

नारायणः एतत् सन्तोषेण अङ्गीकृत्य अनन्तरदिने एव ततः प्रस्थितः। तस्य निर्गमनेन रमापतिः गिरिजा च सन्तुष्टौ। 'वाचालायाः कुरूपिण्याः च सुकुमार्याः कृते वरान्वेषणं सुलभतया न भवति एव। अतः नारायणस्य पीडा परिहृता' इति चिन्तितवन्तौ तौ।

किन्तु ततः तृतीये दिने नारायणः भाटकशकटम् आरुह्य रमापतेः गृहस्य पुरतः उपस्थितः एव। एतत् दृष्ट्वा पतिपत्न्योः मुखं म्लानम् अभवत्।

''एतावच्छीघ्रं पितृष्वसुः पुत्र्याः सुकुमार्याः कृते वरः अन्विष्टः एव वा?'' इति आश्चर्येण पृष्टवान् रमापतिः।

''अहं खलु गतवान्? कार्यसाधनं विना



कथं वा प्रत्यागच्छेयम्? पृच्छतु-वरः कः इति?" इति उत्साहेन पृष्टवान् नारायणः।

"वयं किं जानीमः? भवता एव वक्तव्यम्" इति रमापतिः उक्तवान्।

"अहम् एव नारायणः" इति उच्चैः हसन् उक्तवान् नारायणः।

"सुकुमारीम् अहम् इष्टवान्। सा माम् अङ्गीकृतवती। अतः अन्यस्य सम्बन्धस्य अन्वेषणस्य प्रश्नः एव न उत्थितः। विचित्रः खलु विधेः निर्णयः? आगामिनि बुधवासरे एव मुहूर्तः। शुभवार्तां श्रावयित्वा आमन्त्रणम् अपि दत्त्वा गन्तुम् एव अहम् अत्र आगतवान्। अन्यः मुख्यः विषयः मया वक्तव्यः आसीत् अपि" इति अपि उक्तवान् सः।

"कः सः विषयः?" इति आश्चर्येण पृष्टवन्तौ रमापतिः गिरिजा च।

"द्वयोः कलहः तृतीयस्य लाभाय भवति इति एकम् आभाणकम्। भवतोः कलहतः मम कीदृशः लाभः जातः इति जानीतः खलु?" इति पृष्टवान् नारायणः।

रमापतिः गिरिजा च किमपि वक्तुम् अशक्तौ तूष्णीं स्थितवन्तौ।

तदा नारायणः एव हसन्-"पतिपत्न्योः कलहः तदा तदा भवति एव। एतत् तु सहजम्। किन्तु अत्र तृतीयस्य प्रवेशः यथा न स्यात् तथा ताभ्याम् एव सः कलहः परिहरणीयः। अन्यथा मादृशः कश्चन कलहनिवारणव्याजेन गृहं प्रविश्य क्लेशम् उत्पादयेत्। यावत् कलहः तावत् तस्य भोजनादिकं भवति एव। अतः सः किमर्थं वा कलहं निवारयितुं प्रयत्नं करोति? मम विषयम् एव पश्यताम्। सत्यं वदामि-दैववशात् मम विवाहः निश्चितः। अन्यथा अहं भवतोः गृहं न त्यजेयम् एव। तदा मम निष्कासनार्थं बलात्कारः करणीयः अभविष्यत्" इति उक्तवान्।

"भवान् उत्तमं पाठम् एव पाठितवान्" इति उक्तवती गिरिजा।

रमापतिः अपि हसन् अङ्गीकारपूर्वकं शिरः चालितवान्। सर्वं सुखान्तं जातम् इति ते सर्वे सन्तुष्टाः।





# मृत्युपत्रम्

पूर्व जेरूसलेमनगरे कश्चन वणिक् आसीत्। तस्य एकः एव पुत्रः। वणिक् तु सर्वदा देशविदेशेषु सञ्चारं कुर्वन् वाणिज्यं करोति स्म। पुत्रः तु गृहे एव स्थित्वा विद्याभ्यासं करोति।

वणिजः कश्चन सेवकः आसीत्। वणिक् प्रयाणसमये सर्वदा तम् आत्मना सह नयति स्म।

एकदा वणिक् दूरदेशे आसीत्। तत्रैव सः अस्वस्थः जातः। मरणं समीपम् आगतम् इव इति भावना आगता तस्य मनसि। अतः पुत्रविषयिणी चिन्ता तं सर्वदा बाधते।

पुत्रः इतोऽपि अल्पवयस्कः। समग्रां सम्पत्तिं पुत्रस्य नाम्नि लिखामि चेत् एषः सेवकः तत्सर्वं वशीकृत्य पुत्रम् निर्गतिकं कुर्यात्। अतः पुत्रः वञ्चितः यथा न भवेत् तथा विशिष्टं मृत्युपत्रं लेखनीयम् इति सः निश्चितवान्।

'मृत्युपत्रलेखनार्थं कञ्चित् लेखकम् आनयतु' इति सेवकम् आदिष्टवान् वणिक्। सेवकः एतदनुगुणं सूक्ष्मैः पदैः सुस्पष्टं लेखितुं समर्थं कञ्चन पुरुषम् आनीतवान्। वणिजः कथनानुगुणं सः मृत्युपत्रं सम्यक् लिखित्वा गतवान्।

मृत्युपत्रे वणिजा लेखितम् आसीत् यत् देशविदेशेषु विद्यमाना समग्रा सम्पत्तिः सेवकस्य अधीने तिष्ठति। सेवकतः यत्किमपि एकं मम पुत्रः प्राप्तुम् अर्हति इति।

एतदनन्तरम् अल्पे एव काले वणिक् दिवङ्गतः। धनिकस्य मृत्युपत्रं गृहीत्वा सेवकः जेरूसलेमनगरम् आगतवान्। मृत्युपत्रस्य लेखनानुगुणं सर्वां सम्पत्तिं स्वायत्तीकृतवान् अपि।

पितुः मरणस्य दुःखस्य शमनानन्तरं वणिक्पुत्रः सेवकम् उक्तवान् –"सर्वा

"यहूदी जानपदकथा"

सम्पत्तिः मह्यम् अर्पणीया" इति।

सेवकः एतत् निराकुर्वन् मृत्युपत्रं प्रदर्शयन्- "पश्यतु भोः, एतत् भवतः पित्रा मरणतः पूर्वं लेखितं मृत्युपत्रम्। एतदनुगुणं पितुः सम्पत्तिः मम अधीना एव भवेत्। भवान् तु अत्र यत्किमपि एकं प्रष्टुं प्राप्तुम् च अर्हति" इति उक्तवान्।

पितुः मृत्युपत्रं दृष्ट्वा पुत्रः दिग्भ्रान्तः। किङ्कर्तव्यतामूढः सः पितुः बाल्यस्नेहितस्य कस्यचित् वृद्धस्य समीपं गतवान्, प्रवृत्तं सर्वं निवेदितवान् च।

सः वृद्धः महामेधावी। लोकव्यवहारं सम्यक् जानाति। चतुरोपायेषु अतिनिपुणः। सः सर्वं श्रुत्वा उक्तवान्- "वत्स, चिन्तां न करोतु। एतेन मृत्युपत्रेण भवतः कापि हानिः न भविष्यति। बहु विचिन्त्य एव पिता एतादृशं मृत्युपत्रं लेखितवान्। श्वः भवान् न्यायास्थानम् आगच्छतु। मृत्युपत्रं स्वीकृत्य न्यायालयम् आगन्तुं सेवकम् अपि सूचयतु। तत्र मम सूचनानुसारं व्यवहरति चेत् सर्वं सुसम्पन्नं भविष्यति" इति।

अनन्तरदिने वणिक्पुत्रः, सेवकः च न्यायाधीशस्य समीपं गतवन्तौ। सेवकः स्वसमीपे स्थितं मृत्युपत्रं न्यायाधीशस्य पुरतः स्थापितवान्।

तत् पत्रं समग्रं परिशील्य न्यायाधीशः वणिक्पुत्रं पृष्टवान्- "पितुः सम्पत्तौ भवान् किम् इच्छति?" इति।

किं प्रष्टव्यम् इति सः मेधावी वृद्धः सूचितवान् आसीत्। तदनुगुणं वणिक्पुत्रः सेवकं पश्यन् उक्तवान्– "एतं पुरुषम् एव अहम् अपेक्षे, येन एषः पितुः इव मम अपि सेवकः भवेत्" इति।

'अद्य आरभ्य सेवकेन वणिक्पुत्रस्य सेवकेन भवितव्यम्' इति न्यायाधीशः आदिष्टवान्।

एतेन वणिजः मरणेन देशविदेशेषु या तदीया सम्पत्तिः आसीत् तस्याः उत्तराधिकारी वणिक्पुत्रः एव अभवत्।





# मिथ्यावादिनः

कस्मिंश्चित् ग्रामे चत्वारः बालाः आसन्। ते चत्वारः अपि सर्वदा तत्र तत्र अटन्तः, परस्परं मिथ्यावचनानि वदन्तः, कालं यापयन्ति स्म।

तस्य ग्रामस्य एकस्मिन् भागे एका धर्मशाला आसीत्। एकदा अन्यग्रामतः कश्चित् मनुष्यः तां धर्मशालाम् आगतवान्। तं ते चत्वारः मिथ्यावादिनः दृष्टवन्तः। सः अपरिचितः मनुष्यः बहुमूल्यानि वस्त्राणि धृतवान् आसीत्। तानि वस्त्राणि केनापि प्रकारेण अपहरणीयानि इति ते बालाः निश्चयं कृतवन्तः। अनन्तरं ते तस्य मनुष्यस्य समीपं गत्वा तेन सह वार्तालापं कर्तुम् आरब्धवन्तः।

अन्ते तेषु मिथ्यावादिषु अन्यतमः बालः "इदानीम् अस्मासु एकां स्पर्धां योजयाम। अस्मासु एकैकेन अपि स्वीयाः विचित्राः अनुभवाः वर्णनीयाः। श्रोतृषु यः कोऽपि तस्य अनुभवान् न विश्वसिति चेत् सः अविश्वासी स्वीयवस्त्राणि अनुभववक्त्रे दत्त्वा दास्यम् अङ्गीकुर्यात्" इति उक्तवान्। एतद्वचनं अन्यग्रामीणः मनुष्यः अपि अङ्गीकृतवान्।

प्रथमः एवंरीत्या कथाम् आरब्धवान्- "यदा अहं मातुः गर्भे आसं, तदा मम माता जम्बूफलानां भक्षणस्य इच्छां मम जनकस्य पुरतः प्रकटितवती। अस्माकं गृहस्य पुरोभागे एकः जम्बूवृक्षः आसीत्। किन्तु तावदुन्नतं वृक्षम् आरोढुम् अहं न शक्नोमि इति मम पिता उक्तवान्। मम भ्रातर सर्वेऽपि तत्कार्यं कर्तुं निराकृतवन्तः। तदा मम जनन्याः उपरि मम महती दया उत्पन्ना। अहं मम मातुः बोधः यथा न भवेत्, तथा चातुर्येण तस्याः गर्भतः बहिः आगत्य, जम्बूवृक्षं शीघ्रं शीघ्रम् आरुह्य वृक्षस्थानि सर्वाणि फलानि विचित्य अधः आगतवान्। अनन्तरं तानि फलानि पाकगृहस्य कोणे संस्थाप्य पुनः मातुः गर्भं प्रविश्य तूष्णीं स्थितवान्। मम माता जम्बूफलानां सुगन्धेन

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

आकृष्टा पाकगृहं गत्वा, तत्र स्थितानि फलानि दृष्ट्वा महता सन्तोषेण फलानि खादितवती। अनन्तरं ग्रामवासिभ्यः अपि फलानि दत्तवती। अनन्तरम् अपि यानि बहूनि फलानि अवशिष्टानि, तानि सा गृहस्य पुरतः क्षिप्तवती। तथा क्षिप्तानां फलानां राशिना अस्माकं गृहम् एव अदृश्यम् अभवत्'' इति।

एवंरीत्या कथां समाप्य प्रथमः आगन्तुकस्य मुखम् अवलोकितवान् । ''एषा कथा विश्वासयोग्या एव अस्ति'' इति उक्तवान् सः। अन्ये अपि विश्वासं प्रकटितवन्तः। तदा द्वितीयः मिथ्यावादी एवं वक्तुम् आरब्धवान्–

''जातस्य मम केवलं सप्ताहः अतीतः आसीत्। तदा एव अहं मृगयार्थं वनं गतवान्। वने एकत्र कश्चित् तिन्त्रिणीवृक्षः आसीत्। वृक्षस्य सर्वेषु भागेषु तिन्त्रिणीफलानि लम्बमानानि आसन्। मम तु महती बुभुक्षा जाता। अतः सपदि एव अहं वृक्षम् आरुह्य उदरपूर्णं तिन्त्रिणीफलानि खादितवान्। तेन मम उदरं भारभूतं जातं, तथा तन्द्रा उत्पन्ना। अधः अवतरणम् अशक्यं जातम्। तदा अहं वृक्षात् अधः अवप्लुत्य ग्रामस्य अन्तः धावित्वा, कस्यचित् निश्रेणिम् आनीय, तद्द्वारा सलीलम् अधः आगतवान्। मम सौभाग्येन सा निश्रेणिः लब्धा। नो चेत् इदानीम् अपि अहं तत्रैव अभविष्यम्'' इति।

एतत् अपि श्रुत्वा ''सत्यं सत्यं, मम तु विश्वासः अस्ति'' इति वदन् अन्यग्रामीणः शिरः चालितवान्। अन्ये अपि तथैव विश्वासम् अङ्गीकृतवन्तः।



तदा तृतीयः मिथ्यावादी आधोनिर्दिष्ट–प्रकारेण वक्तुम् आरब्धवान् –

"पूर्वं कदाचित् अहं क्रीडामग्नः आसम्। तदा एकं शशं दृष्ट्वा ग्रहीतुं धावितवान्। सः शशः धावन् धावन् एकं गुल्मं प्रविष्टवान्। अहमपि आग्रहपूर्वकं तं गुल्मं प्रविष्टवान्। किन्तु तत्र किं पश्यामि! एकः महाव्याघ्रः मुखं व्यादाय मां गिलितुम् अग्रे आगतः। "अहं तु शशम् अन्विष्यन् अत्र आगतवान्। अतः भवान् मां भक्षयति चेत् दोषभाक् भवति" इति उक्तवान्। किन्तु सः व्याघ्रः मम वचनम् अश्रृण्वन्, मम उपरि आक्रमणं कृतवान्। मम तु महान् क्रोधः उत्पन्नः। तदा मम वामहस्तेन तस्य मुखे ताडनं दत्तवान्। तदा व्याघ्रस्य मुखं द्विधा भिन्नम् अभवत्। सः तत्रैव मृतः।

एतां कथाम् अपि श्रुत्वा अन्यग्रामीणः स्वीयविश्वासं प्रकटयन् इव शिरः चालितवान्। अवशिष्टाः त्रयः अपि शिरांसि चालितवन्तः।

तदा चतुर्थः मिथ्यावादी एवं वक्तुम् आरब्धवान्–"गतवर्षे अहं मीनानां ग्रहणार्थं गतवान्। एकोऽपि मीनः मया न लब्धः। किमर्थम् एवं जातम् इति ग्रामीणान् अहं पृष्टवान्। तेषाम् अपि सा एव समस्या आसीत्। नद्याः अधोभागे एव किमपि विघ्नभूतं स्यात् इति प्रतीतिः अभवत्। तस्य अपि शोधनं कुर्मः इति चिन्तयित्वा, अहं मम नौकातः उत्प्लुत्य जलं प्रविष्टवान्। नद्याः अधोभागे शैलाकारः एकः मीनः आसीत्। सः मीनः एव अन्यान् सर्वान् मीनान् भक्षयति इति ज्ञातम्। तदा अहम् एकेनैव प्रहारेण



बृहदाकारकं तं मीनं हतवान्। अत्रान्तरे अहं महत्या बुभुक्षया पीडितः अभवम्। तदा तत्रैव अग्निं प्रज्वाल्य, तस्मिन् अग्नौ तं मीनं पक्त्वा, सम्पूर्णम् अहं भक्षितवान्। अनन्तरं जलात् उपरि आगत्य, मम नौकाम् आरुह्य गृहं प्रत्यागतवान्" इति।

एषा कथा अपि विश्वासार्हा अस्ति इति अन्यग्रामीणः वदन् शिरः चालितवान्। गत्यन्तराभावात् अन्ये अपि स्वीयविश्वासं प्रकटितवन्तः।

इदानीम् अन्यग्रामीणस्य पर्यायः आसीत्। सः वक्तुम् आरब्धवान्–

पूर्वं मदीयम् एकं कार्पासोद्यानम् आसीत्। तस्मिन् उद्याने एकः महोन्नतः कार्पासवृक्षः आसीत्। तस्य केवलम् उपरिभागे चतस्रः बृहत्यः शाखाः आसन्। एकैकस्याम् शाखायाम् एकैकः शलाटुः आसीत्। यदा चत्वारः अपि शलाटवः पक्वाः जाताः, तदा तेषाम् अन्तर्भागेभ्यः चत्वारः बालाः बहिः आगतवन्तः। तैः उद्यानकार्याणि कारयन् आसम्। काले गच्छति सति, ते बालकाः अलसाः भूत्वा उद्यानकार्यं यथापूर्वं न कुर्वन्ति स्म। अहं तु तान् भर्त्सयन् साग्रहं तैः कार्याणि कारयामि स्म। एकदा, ते सर्वे अनुक्त्वा एव कुत्रापि गतवन्तः। तान् अन्विष्यन् आगतः अहम् अत्र तान् दृष्टवान्। ते चत्वारः बालाः भवन्तः एव। इदानीं बलात्कारं विना मया सह आगत्य मम उद्यानस्य कार्यं कुर्वन्तु" इति।

तस्य वचनानि श्रुत्वा चत्वारः अपि मिथ्यावादिनः अधोमुखाः अभवन्। इदानीं ते महति क्लेशे पतिताः आसन्। सत्यम् इति अङ्गीकुर्वन्ति चेत्। ते सर्वे निश्चयेन तस्य आगन्तुकस्य दासाः भवन्ति। विश्वासः नास्ति इति वदन्ति चेत् अपि पूर्वनिश्चित–नियमानुसारं दासाः एव।

"एवं तर्हि भवतां सर्वेषां सर्वाणि वस्त्राणि मह्यं यच्छन्तु। अहं भवद्भ्यः स्वातन्त्र्यम् दास्यामि" इति उक्त्वा सः अन्यग्रामीणः तेषां वानरमतीनां वस्त्राणि स्वीकृत्य, तानि वस्त्राणि याचकेभ्यः प्रदाय, स्वीयं मार्गं गृहीत्वा ततः निर्गतवान्।





# जलांशरहितः प्रदेशः!

चिलीदेशे अटकामा कश्चन मरुभूमिप्रदेशः। एतस्मिन् प्रदेशे सर्वथा जलांशः नास्ति इति परिगण्यते। गतेभ्यः ४०० संवत्सरेभ्यः अत्र वृष्टिः बिन्दुमात्रम् अपि न पतिता।

# भूमेः अन्तः पष्प्यति सस्यम्!

आस्ट्रेलियाप्रदेशे परिदृश्यमानं रिजान् थेलिया गार्डनरी नामकं सस्यं भूमेः अन्तः एव पुष्प्यति।






# महावृक्षः

प्रपञ्चे एव अत्युन्नतः वृक्षः क्यालिफोर्निया प्रदेशे अस्ति। जनाः एतं वृक्षं जनरल् षर्मन् इति प्रीत्या आह्वयन्ति। एतस्य वृक्षस्य औन्नत्यं २७२ फूट्। वैशाल्यं च ७१.१ फूट्। भारः तु २०३० टन् स्यात्।

# कठिनशब्दानां सान्दर्भिकाः
# अर्थाः

अङ्गभङ्गः - Loosening the limbs
अन्वेति - Applies
अपेक्षे - Look for
आर्जितम् - Earned
आश्विकः - Horseman
आस्फालनम् - Patting
इष्टिका - Brick
उल्लाघता - Feeling of relief
ऊरुः - Thigh
कार्पासः - Cotton
कालकः - Mole
कुक्कुटशावकः - Chick
गुल्मः - Bush
गोष्ठम् - Cattle-shed
जामाता - Son-in-law
जामिता - Boring
जृम्भणम् - Yawn
तर्णकः - Calf
तिन्त्रिणीवृक्षः - Tamarind tree
दोग्धि - Milks
द्रोणः - A unit of measure
निःश्रेणिः - Ladder
पाटवः - Ability
पितृष्वसा - Father's sister
पित्तम् - Bile
पीनसः - Cold
प्रतीतिः - Time honoured belief
प्रवालः - Coral
मर्कटः - Monkey
मृत्युपत्रम् - Will and testament
यथाश्रुतम् - What is heard
यौतकम् - Gifts given at marriage
वटः - Banyan
वाचाला - Talkative
विमाता - Step-mother
वैमात्रेयः - Step-son
व्यादाय - Having opened wide
व्यापृतः - Be busy
व्यामोहः - Attachment
शशः - Rabbit
शिबिका - Palanquin
शृङ्खला - Chain
श्मश्रु - Moustache
सप्ताहः - Week



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां फेब्रवरी-८७ मासे प्रकटयिष्यामः।**





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा डिसेम्बर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'अक्टोबर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **निद्रायाः निरीक्षणम्?**

द्वितीयचित्रम् - **अनुकरणं विलक्षणम्!**

प्रेषकः— के. कामेश्वर राव्, लजपतिरायपेटा, IV स्ट्रीट्, पालकोल-५३४२६१ (आ.प्र.)

---


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६.

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.



The stories, articles and designs contained herein are exclusive property of the Publishers and copying or adapting them in any manner will be dealt with according to law.

# कूपखननं प्रवर्तते

| | |
|---|---|
| रामः - अरे शङ्कर! अनिरीक्षितं दर्शनम्! कदा आगतवान्? | Oh, Shankar! Unexpected visit! When did you arrive? |
| शङ्करः - सामान्यतः अर्धघण्टातः पूर्वम्। | Just half an hour before. |
| रा - पानीयं किमपि स्वीकृतवान् वा न वा? | Had your food? |
| श - सर्वं सम्पन्नम्। कुत्र गतवान् आसीत् भवान्? | Had every thing. Where had you been? |
| रा - शाकवाटिकां गतवान् आसम्। | I had been to the Garden. |
| श - अन्धकारे व्याप्ते अपि किं कार्यं तत्र भोः? | Even in this darkness? What was the work? |
| रा - कूपखननं प्रवर्तते। तत् परिशीलयन् आसम्। | I was watching the well being dug. |
| श - रात्रौ अपि कार्यं प्रचलति वा? | Is that done at night also? |
| रा - रात्रौ एव कार्यम्। कूपखानकाः दिने अन्यत्र कृषिक्षेत्रेषु कार्यं कुर्वन्ति। रात्रौ एतत् कार्यं कुर्वन्ति। कौमुदी तु अस्ति एव किल? | It is done only at night, because the workers are engaged in the farms during the day and they come here in the night. Moon light is there, you know. |
| श - जलं प्राप्तं वा? | Were they able to find water? |
| रा - न भोः, खननकार्यम् एव मन्दं प्रवर्तते। यतः भूमिः शिलाखण्डमयी अस्ति। खननं क्लेशाय। | Not yet. Digging itself is difficult and rather slow, because the earth is rocky around there. |
| श - जलं सुलभतया न प्राप्यते? | Is it not easy to get water? |
| रा - तथा न, अद्य जलं प्राप्येत। पुरुषप्रमाणद्वयं यावत् खननाभ्यन्तरे जलं प्राप्येत इति अन्तर्जलविदा अपि उक्तम् अस्ति। | No. We may get it after today's digging. Water diviner's prediction is that water would be found within twelve feet. |



# चन्दामामा

## मनोरंजक एवं ज्ञानवर्द्धक उत्कृष्ट मासिक पत्र

* चन्दामामा हमारे पुराण व साहित्य के श्रेष्ठ रत्नों को क्रमबद्ध रूप में प्रदान करता है ।
* व्यापक दृष्टिकोण को लेकर विश्व साहित्य की अद्भुत काव्य कथाओं को सरल भाषा में प्रस्तुत करता है ।
* मृदुहास्य, ज्ञानवर्द्धक तथा मनोरंजक सुन्दर कहानियों द्वारा पाठकों को आकृष्ट करता है ।
* हमारी पुराण गाथाओं को प्रामाणिक रूप में परिचय करता है ।
* हास्यपूर्ण प्रसंगों तथा व्यावहारिक ज्ञान प्रदान करने वाले शीर्षकों के साथ पाठकों का उत्साह वर्द्धन करता है ।
* चन्दामामा केवल आपके जीवन में ही नहीं बल्कि आपके बन्धु एवं मित्रों के जीवन में भी रचनात्मक पात्र का व्यवहार करता है । इसलिए आप अपने घनिष्ट मित्रों को चन्दामामा भेंट कीजिए ! उपहार में दीजिए !

**बच्चों के लिए प्रस्तुत चन्दामामा, पाठकों में नवयौवन का उत्साह एवं आनन्द प्रदान करता है ।**

तेरह भाषाओं में प्रकाशित चन्दामामा का साप किसी भी भाषा का ग्राहक बन सकते हैं !

**तेलुगु, तमिल, हिन्दी, अंग्रेज़ी, असामी, बंगाली, गुजराती, कन्नड, मलयालम, मराठी, उडिया, पंजाबी और संस्कृत ।**

## वार्षिक चन्दा: रु. ३०-००

आप किस भाषा का चन्दामामा चाहते हैं, इसका उल्लेख करते हुए निम्न लिखित पते पर अपना चन्दा भेजिए:

**डाल्टन एजेन्सीस**

चन्दामामा बिल्डिंग्स,

वडपलनी, मद्रास-६०० ०२६.

